र्तिकाग्निशिखासहस्रप्रस्तनैशान्धकारराशिरागत्यार्थसिद्धये यतेथा' इति।

( १८ ) स किल कृतज्ञतां दर्शयन्—'असिद्धिरेषा सिद्धिः, यदर्यमिश्रविरहितार्थाणाम् । कष्टा चेयं निःसङ्गता, या निरागसं दासजनं त्याजयति । न च निषेधनीया गरीयसां गिरः' इति स्नानाय गृहानयासीत् । अहं च निर्गत्य निर्जने निशीथे सरस्तीररन्ध्रनिलीनः सक्षीयच्छिद्रदत्तकर्णः स्थितः।

वलस्य भूसुरस्य तैलिलगणा देवा ब्राह्मणा इत्यर्थः येनासौ । कृतब्राह्मणपूज इत्यर्थः । तिलस्नेहेति—तिलस्नेहेन तिलतैलेन सिक्तानाम् आर्द्रीकृतानां वह्न्यग्रेषु दण्डाग्रेषु ग्रथितानां प्रोतानां वर्तिकानां दीपदशानाम् अग्निशिखासहस्रेण अग्निज्वालासमूहेन ग्रस्तो ध्वस्तः नैशान्धकारराशिः रजनीतिमिरसङ्घो येनासौ । आगत्य-सरस्तटमिति शेषः । अर्थसिद्धये स्वप्रयोजनसम्पादनाय यतेथाः प्रयत्नं कुर्याः ।

( १८ ) स अर्थसिद्धः । कृतज्ञतां स्वकृतज्ञभावं दर्शयन् प्रकाशयन् गृहानयासीदित्यग्रिमेणान्वयः । असिद्धिरित्यादि—एषा सिद्धिः मदभीष्टलाभः असिद्धिरलाभ एव, यत्-यतः आर्याणां भवादृशां महापुरुषाणामिह अस्मिन् स्थाने अतिविविरसन्निधानम् अनवस्थानमिति यावत् । मत्प्रयोजनसिद्धौ सत्यामपि भवतोऽन्यत्र गमनाद्य सा सिद्धिर्मे रोचते इति भावः । इयमीदृशी निःसङ्गता—सङ्गराहित्यम् । कष्टा—दुःखदायिनी । या निःसङ्गता । निरागसं निरपराधं दासजनं सेवकं मामिति शेषः त्याजयति दूरीकरोति । गरीयसां गुरूणां गिरः वचनानि । गुरूणां वाक्यानि न लङ्घनीयानि अतो नाहं भवन्तं प्रतिरुणध्मि इति भावः । इति-एवमुक्त्वा । स्नानाय-स्नातुम् । अहं-मन्त्रगुप्तः । निशीथे अर्धरात्रे । सरस्तीरेति-सरसस्तीरे यद् रन्ध्रं बिलं तत्र निलीनो गुप्तः । ईषदिति ईषच्छिद्रे स्वल्परन्ध्रे दत्तौ

हजारों अग्निशिखासे रातका अन्धकार दूर करें। और अपने अर्थसिद्धिका प्रयत्न करें।

( १८ ) वह राजाने कृतज्ञता प्रकाशित करते हुए कहा—'यह लाभ मुझे इस समय अलाभके समान प्रतीत होता है, क्योंकि, इस अवसर पर आपका रहना न होगा। आपके सङ्गसे रहित होना कष्टप्रद है। हाय! निःसङ्गताके कारण निरपराधी सेवकका (मेरा) आपसे वियोग हो जायगा। गुरुजनोंकी वाणीका उल्लङ्घन नहीं करना चाहिये (इसलिए मैं आपको रोक भी नहीं सकता)।' इस प्रकार कहकर स्नानके लिये घर चला गया। मैं ( मन्त्रगुप्त ) भी सूनी आधी रातमें उस कुटीसे निकलकर तालाबके तीरवाले बिल ( छेद ) में प्रविष्ट होकर छोटे छेदमें कान लगाकर बैठ गया। आधी रातके समय वह राजा, मुझसे उपदेशित क्रियाओंको करके स्थान-स्थान पर रक्षक पुरुषोंको नियुक्त करके, अनेकों धीवरोंको लाकर, उस तालाबके अन्य प्रदेशके द्वारों ( घाटों ) को निकलवाकर उस तालाबके जलमें

स्थिते चार्धरात्रे कृतयथादिष्टक्रियः स्थानस्थानरचितरक्षः स राजा जालकजनानानीय निराकृतान्तःशल्यं शङ्काहीनः सरःसलिलं सलीलगतिरगाहत गतं च कीर्णकेशं संहृतकर्णनासं सरसस्तलं हास्तिनं नक्रलीलया नीरातिनिलीनया तं तथा शयानं कन्धरायां कन्यया न्यग्रहीषम् । खरतरकालदण्डसंघट्टनातिचण्डैश्च करचरणघातैर्निर्दयदत्तनिग्रहः क्षणेनैकेनाजहादस्य चेष्टाम् । ततश्चाकृष्य तच्छरीरं छिद्रं निधाय नीरान्निरयासिषम् ।

(१९) सङ्गतानां च सैनिकानां तदत्यर्थचित्रीयताकारान्तरग्रहणम् ।

कर्णौ येन तादृशः । स्थिते अवशिष्टे । कृतेति—कृता अनुष्ठिता यथादिष्टा मत्कथनानुरूपा क्रिया येनासौ । स्थानेति—स्थाने अनेकेषु स्थानेषु रचिता कृता रक्षा रक्षिपुरुषसंस्थापनं येनासौ । राजा जयसिंहः । निराकृतेति—निराकृतं दूरीकृतं परीक्ष्य शोधितमिति यावत् अन्तःशल्यं जलमध्यस्थविघ्नो यस्य तादृशं सरःसलिलम् । सलीलगतिः सविलासगमनः । अगाहत प्राविशत् । गतमित्यादि—कीर्णकेशं कीर्णा विक्षिप्ताः केशा मूर्द्धजा यस्मिन् कर्मणि तद् यथा तथा, संहृतकर्णनासं—कर्णौ च नासे चेति कर्णनासं प्राण्यङ्गत्वादेकवद्भावः संहृतं पिहितं कर्णनासं यस्मिन् कर्मणि तद् यथा तथा । एतत्पदद्वयं गतमिति क्रियाया विशेषणम् । हास्तिनं-हस्तिप्रमाणकं—हस्ती प्रमाणमस्येति अण्प्रत्ययः । सरसस्तलं गतं प्रविष्टं, तथा पूर्वोद्दिष्टानुसारेण शयानं सुप्तम् तं जयसिंहं ग्रीवायां कन्धरायां नक्रलीलया नक्रस्य मकरस्येव लीला तया-नक्रवदित्यर्थः नीरातिनिलीनया नीरे सलिले अतिनिलीनया अत्यन्तनिमग्नया कन्यया प्रावरणविशेषेण न्यग्रहीषं निगृहीतवानहमिति शेषः । खरतरेति—खरतरोऽतितीक्ष्णः यः कालदण्डो यमदण्डस्तस्य यत्सङ्घट्टनं सङ्घर्षस्तद्वत् अतिचण्डैः अतिभीषणैः । करचरणघातैः हस्तपादप्रहारैः । निर्दयेति—निर्दयं यथा तथा दत्तो निग्रहो निकारो यस्यासौ । स जयसिंहः चेष्टां अजहात् अम्रियत । ततः—सरस्तलात् । आकृष्य बहिष्कृत्य । छिद्रे पूर्वकृतरन्ध्रे । निधाय संस्थाप्य । निरयासिषम्-निर्गतोऽभवम् ।

(१९) सङ्गतानां तत्रोपस्थितानाम् । तदाकारान्तरग्रहणं अन्याकारप्राप्तिः ।

विलासयुक्त प्रविष्ट हुआ । राजा अपने बालोंको खोलकर, कान-नाक बन्दकर हस्तिप्रमाण जलमें सो गया । तब मैंने उस सोनेवाले राजाके गलेको पानीमें अत्यन्त गुप्त मगरकी लीलासे कन्था कन्था द्वारा पकड़ लिया । तदनन्तर अत्यन्त तीक्ष्ण कालदण्ड के संघटनके समान अति भीषण अपने हाथ-पैरोंके आघातसे उस राजाको खूब मारा जिससे उस जयसिंहने एक क्षणमें ही अपनी लीला समाप्त कर दी ( मर गया )। फिर उसके शरीरको ले जाकर उसी छेदमें रख दिया और मैं जलसे बाहर आ गया ।

(१९) वहांपर उपस्थित सैनिकोंने रूप-परिवर्त्तन देखकर अत्यन्त आश्चर्य प्रकट

गजस्कन्धगतः सितच्छत्रादिसकलराजचिह्नराजितश्चण्डतरदण्डिदण्डताडनत्रस्तजनदत्तान्तरालया राजवीथ्या यातस्तां निशां रसनयननिरस्तनिद्रारतिरनैषम्। नीते च जनाक्षिलक्ष्यतां लाक्षारसस्निग्धदिग्गजशिरःसदृशे शक्रदिगङ्गनारत्नादर्शेऽर्कचक्रे कृतकरणीयः किरणजालकरालरत्नराजिराजितराजार्हासनाध्यासी यथासदृशमाचारदर्शिनः शङ्कावनम्रिताङ्गान्सचि

अथ विनीयेत—अथ प्रापञ्चनकमभवत्। गजस्कन्धगतः हस्तिपृष्ठस्थितः। सितेति सितच्छत्रमादि येषां तानि सितच्छत्रादीनि श्वेतातपत्रप्रभृतीनि यानि सकलानि निखिलानि राजचिह्नानि नृपलक्षणानि तैः राजितः शोभितः। विशेषणद्वयमह मित्यस्य मन्त्रगुप्तवाचकस्य। चण्डतरेति—चण्डतराणामतिप्रचण्डानां दण्डिनां दण्डधारिदौवारिकाणां दण्डैर्लगुडैस्ताडनेन प्रहारेण त्रस्ता भीता ये जनास्तैर्दत्त मन्तरालमवकाशो यस्यां तया। राजवीथ्या राजमार्गेण। यातश्चलितः। अहमिति शेषः। रसेति—रसेन अत्यधिकानन्दे कनकलेखानुरागेण वा नयनाभ्याम्—पञ्चमी द्विवचनमेतत्—निरस्ता अपगता निद्रारतिः शयनप्रीतिः यस्य तादृशोऽहम् अनैषम् अत्यवाहयम् निशामिति पूर्वोक्तेनान्वयः। नीते चेत्यादि—लाक्षारसेन यावकेन स्निग्धमनुलिप्तं यद् दिग्गजस्य दिङ्मातङ्गस्य शिरो मस्तकं तत्सदृशे तत्तुल्ये रक्तवर्णे इति भावः, शक्रस्य दिक् पूर्वाशा—सैवाङ्गना कामिनी तस्या रत्नादर्शे मणिदर्पणस्वरूपे अर्कचक्रे सूर्यमण्डले जनाक्षिलक्ष्यतां नरनयनगोचरतां नीते प्रापिते सति—सूर्ये उदिते सतीत्यर्थः। कृतकरणीयः विहितनित्यक्रियः। किरणजालेति—किरणजालेन मयूखमण्डलेन करालाः व्याप्ता या रत्नराजिः रत्नसमूहस्तया राजितं शोभितं यद् राजार्हं राजयोग्यमासनं तदध्यास्ते इति तच्छीलः। अहमिति शेषः। यथेति—यथासदृशं स्वस्वाधिकारोचितम् आचारं राजमर्यादादिकं दर्शयन्ति ये तान्। शङ्केति—शङ्कया—यथा राज्ञ आकृतिपरिवर्तनं जातं तथैव प्रकृतेरपि

किया। हाथीके ऊपर चढ़कर सफेद छत्र आदि सभी राजचिह्नोंसे सुशोभित मैं राजमार्गसे चला। उस राजमार्गको अत्यन्त प्रबल दण्डधारी सेवकगण आगे आगे दण्डोंके प्रहार द्वारा जनोंको भय दिखाकर खाली करा देते थे। उस रात कनकलेखाके प्रबलानुरागसे मुझे आँखोंमें निद्रा न आयी—वह रात मैंने जागकर बिता दी। प्रभातमें जब लाक्षारससे परिव्याप्त हुए दिग्गजोंके मस्तकोंके तुल्य, इन्द्रकी दिशा-(पूर्वदिशा-) रूपी अङ्गनाके मणिदर्पणके सदृश, सूर्यमण्डल लोगोंकी आँखोंके सामने लक्षित हुआ। उस समय मैं नित्यक्रियासे निवृत्त होकर, किरणजालसे परिपूर्ण एवं रत्नराशिसे देदीप्यमान, राजाओंके अनुरूप श्रेष्ठ (सिंहासन) पर आरूढ़ होकर बैठा। उस समय यथानुरूप अपने नियमाचरणोंको प्रदर्शित करनेवाले, भयसे शरीरोंको कुञ्चित

विनिपादिनः सहायानगादिषम्—'दृश्यतां शक्तिरार्षी, यत्तस्य यतेरजेयस्येन्द्रियाणां संस्कारेण नीरजसा नीरजसांनिध्यशालिनि सहर्षालिनि सरसि सरसिजदलसन्निकाशच्छायस्याधिकतरदर्शनीयस्याकारान्तरस्य सिद्धिरासीत्। अद्य सकलनास्तिकानां जायेत लज्जानतं शिरः। तदिदानीं चन्द्रशेखरनरकशासनसरसिजासनादीनां त्रिदशेशानां स्थानान्यादररचितनृत्यगीताराधनानि क्रियन्ताम्। ह्रियन्तां च गृहादितः क्लेशनिरसनसहान्यर्थिसार्थैर्धनानि' इति।

परिवर्त्तनं जातं स्यादिति भयेन यन्त्रितानि सङ्कुचितानि अङ्गानि गात्राणि येषां तान्। सन्निधिनिपादिनः सन्निधौ समीपे निषीदन्ति ये तान् पार्श्वचरानित्यर्थः। सहायान् सचिवादीन्। अगादिषम् अवोचम्। शक्तिः प्रभावः। आर्षी ऋषिसम्बन्धिनी। यत्तस्येत्यादि—इन्द्रियाणां चक्षुरादीनां करणानां अजेयस्य जेतुमशक्यस्य तस्य पूर्वोक्तस्य यतेर्मुनेः नीरजसा रजोगुणरहितेन पवित्रेणेत्यर्थः संस्कारेण मन्त्रानुष्ठानेन नीरजानां कमलानां सान्निध्येन सम्पर्केण शालते शोभते एवं शीले—तथा सहर्षाः सानन्दा अलिनो भ्रमरा यत्र तथाभूते सरसि सरोवरे सरसिजदलैः कमलदलैः सन्निकाशा तुल्या छाया कान्तिर्यस्य तादृशस्य तथा अधिकतरदर्शनीयस्य परमरमणीयस्य आकारान्तरस्य अन्यशरीरस्य सिद्धिः प्राप्तिरभूत्। ममेति शेषः। अद्य साम्प्रतम् सकलनास्तिकानां मन्त्रतन्त्रादिप्रभावमस्वीकुर्वताम् पाषण्डानामित्यर्थः। जायेत भवेत्। तत् तस्मात्। चन्द्रशेखरो महेश्वरः, नरकशासनो विष्णुः सरसिजासनो ब्रह्मा तदादीनां त्रिदशेशानां देवानाम्। स्थानानि मन्दिराणि। आदरेति—आदरेण श्रद्धया भक्त्या वा रचितमनुष्ठितं नृत्यगीताभ्यां आराधनं पूजनं येषु तानि। ह्रियन्तां नीयन्ताम्। गृहात् इतः अस्माद् राजसदनात्। क्लेशनिरसनसहानि-दारिद्र्यदुःखनाशसमर्थानि धनानि। अर्थिसार्थैः याचकसमूहैः। दरिद्रा आगत्य यथेष्टं स्वाभिलषितं धनं गृह्णन्त्विति भावः।

करनेवाले, पार्श्वचरों और सहायकोंसे मैंने कहा—ऋषियोंकी शक्ति देखिये। इन्द्रियोंसे अजेय उस तपस्वीके पवित्र ( रजोगुण रहित ) संस्कारद्वारा उस तालाबमें, मैंने कमल दलतुल्य तथा उससे भी अधिक दर्शनीय देह प्राप्त की। जिस तालाबमें कमलोंके समीप रहनेवाले प्रमुदित भौंरे कमल पर शोभा पा रहे हैं। ( अपूर्व सिद्धि प्राप्त की। आज सभी नास्तिकोंका ( आर्यधर्मविहीनोंका ) शिर लज्जासे झुक गया है। अतः सम्प्रति शर्मा, महादेव, विष्णु, ब्रह्मा तथा अन्य देवताओंके मन्दिरोंमें श्रद्धाके साथ नाच-गाना एवं पूजा-अर्चा होवे। दारिद्र्यके दुःखको नाश करनेवाली लक्ष्मी ( धन, वस्त्र आदि ) याचक जनोंको इस राजप्रासादसे दिये जावें।

( २० ) आश्चर्यरसातिरेकहृष्टदृष्टयस्ते 'जय जगदीश, स्वतेजसातिशय्य दश दिशः स्थगयन्निजेन यशसादिराजयशांसि' इत्यसकृदाशास्य रचयन्यथादिष्टाः क्रियाः । स चाहं दयिताया मत्तो हृदयस्थानीयां शशाङ्कसेनां कन्यकां कदाचित्कार्यान्तरागतां रहस्याचचक्षे—'कच्चिदयं जनः कदाचिदासीद् दृष्टः' इति ।

( २१ ) अथ सा हर्षकाष्ठां गतेन हृदयेनेषदालक्ष्य दशनदीधितिलतां लीलालसं लासयन्ती, ललिताञ्चितकरशाखान्तरितदन्तच्छदकिसलया,

---

( २० ) आश्चर्येति—आश्चर्यरसस्य विस्मयस्य अतिरेकेण आधिक्येन हृष्टा प्रसन्ना दृष्टिर्येषां ते तादृशाः । स० अतिशय्य । स्वतेजसा निजप्रतापेन दशदिशः अतिशय्य अतिक्रम्य निजेन यशसा कीर्त्या आदिराजयशांसि पूर्वनृपतिकीर्तीः स्थगयन् आच्छादयन् जय सर्वोत्कर्षेण वर्तस्वेति असकृत्पुनःपुनः आशास्य आशीर्भिरभिनन्द्य यथादिष्टाः राजाज्ञानुसारेण क्रियाः देवताराधनादिका रचयन् अन्वतिष्ठन् । स च अहं—नृपरूपेण परिणतो मन्त्रगुप्त इत्यर्थः । दयितायाः प्रियायाः । हृदयस्थानीयां स्वहृदयतुल्यामन्तरङ्गभूताम् । कार्यान्तरागतां—अन्यकार्यव्यपदेशेनागताम् । रहसि निर्जने । आचचक्षे अकथयम् । अयं जनः—मन्त्रगुप्तः । कदाचित् कस्मिन्नपि समये । दृष्ट आसीत् त्वयेति शेषः कच्चित्-किम् ।

( २१ ) अथ प्रश्नानन्तरम् । सा शशाङ्कसेना । हर्षकाष्ठां हर्षातिशयम् । गतेन प्राप्तेन हृदयेनोपलक्षिता । ईषदल्पं आलक्ष्य दृष्ट्वा दशनदीधितिरेव दन्तकिरणा एव लता वल्ली तां लीलालसं विलासमन्दं यथा तथा लासयन्ती नर्तयन्ती प्रक्षिपन्तीति यावत् । तथा ललितेति—ललितं सुन्दरं यथा तथा

---

( २० ) विस्मयकी अधिकतासे प्रफुल्लित दृष्टिवाले उन याचकगण तथा मन्त्रिगणने 'जय जगदीश' एवं 'अपने प्रतापसे दश दिशाओंको परिव्याप्त करके तथा अपने यशसे पूर्ववर्ती राजाओंकी कीर्तिको जिन्होंने आच्छादित कर लिया है' ऐसे-ऐसे प्रशंसनीय वाक्य तथा आशीर्वचनको बार बार कहकर, राजाद्वारा आदेशित पूजा-अर्चा समाप्त की। मैंने तब किसी समय मेरे समीप किसी कार्यवश आयी हुई अपनी प्यारीकी सखी जो उसकी अन्तरङ्गिणी थी जिसका नाम शशाङ्कसेना था, उस शशाङ्कसेनासे मैंने ( मन्त्रगुप्तने ) एकान्तमें कहा—'क्या इस पुरुषको ( मुझे ) कभी पहिले देखा था ?'

( २१ ) प्रश्नके बाद उस शशाङ्कसेनाने आनन्दकी परम सीमासे युक्त चित्तसे कुछ देर देखकर, दन्तकान्ति लताको विलासमें नर्तन कराकर, सुन्दर और सङ्कुचित हाथकी अंगुलियोंसे अपने अधर पल्लवको ढककर, हर्षमें उत्पन्न जो आँसू उससे व्याप्त व कज्जल रहित नेत्रोंसे बद्धाञ्जलि होकर कहा—'मैं आपको भली-भाँति पहचानती हूँ, यदि यह हार ( प्रतीति ) और अधरमें नहीं रचा हुआ है तो यह कैसे

हर्षजलक्लेदजर्जरनिरञ्जनेक्षणा रचिताञ्जलिः नितरां जाने यदि न स्यादैन्द्रजालिकस्य जालं किञ्चिदेतादृशम् । कथं चैतत् कथय । इति स्नेहनिर्यन्त्रणं शनैरगादीत् । अहं चास्यै कार्त्स्न्येनाख्याय तदाननसङ्क्रान्तेन सन्देशेन सञ्जनय्य सहचर्यो निरतिशयं हृदयाह्लादं ततश्चैतया दयितया निरर्गलीकृतातिसत्कृतकलिङ्गनाथन्यायदत्तया सङ्गत्यान्ध्रकलिङ्गराजराज्यशासी तस्यास्यारिणा लिलङ्घयिषितस्याङ्गराजस्य साहाय्यकायालघीयसा साधनेनागत्यात्र ते सखिजनसङ्गतस्य यादृच्छिकदर्शनानन्दराशिलङ्घित-

अञ्चितया संकुचितया करशाखया कराङ्गुल्या अन्तरितौ पिहितौ दन्तच्छदौ ओष्ठाधरावेव किसलयौ यथा तादृशी, तथा—हर्षेति—हर्षजलक्लेदेन आनन्दाश्रुनिर्गमेण जर्जरे क्लान्ते अतएव निरञ्जने कज्जलरहिते ईक्षणे नयने यस्याः सा। नितरां-अतिशयेन। जाने-त्वां जानामि। ऐन्द्रजालिकस्य मायाविनः। जालं-कपटम् एतादृशं एवम्भूतम्। यद्येषा ऐन्द्रजालिकमाया न स्यात्तदा त्वां सर्वथा परिचिनोमीत्यर्थः। कथं चैतत् कथय—कथमेवं सम्भावितमभूत् तत् कथयेत्यर्थः। स्नेहनिर्यन्त्रणं—स्नेहेन प्रेम्णा निर्यन्त्रणं निर्बाधम्। अस्यै शशाङ्कसेनायै। कार्त्स्न्येन-साकल्येन। तदाननसंक्रान्तेन-शशाङ्कसेनामुखद्वारा कथितेन। संजनय्य-उत्पाद्य। सहचर्याः कनकलेखायाः। एतया पूर्वोक्तया कनकलेखया। कीदृश्या इत्याह-निरर्गलीति-निरर्गलीकृतेन बन्धनान्मोचितेन ततः सत्कृतेन पूजितेन कलिङ्गनाथेन कर्दनाख्येन न्यायेन विधिपूर्वकं दत्तया अर्पितया कृतविवाहयेत्यर्थः। संगत्य संगं प्राप्य। आन्ध्रेति-आन्ध्रकलिङ्गराजयोः आन्ध्रराजस्य कलिङ्गराजस्य च राज्यं शास्तीति तच्छासी अहमिति शेषः। तस्येत्यादि-तस्य पूर्ववर्णितस्यास्य अङ्गराजस्य सिंहवर्मणः अरिणा, शत्रुणा चण्डवर्माख्येन लिलङ्घयिषितस्य आक्रमितुमिष्टस्य। साहाय्यकाय-साहाय्यं कर्त्तुम्। अलघीयसा विपुलेन। साधनेन सैन्येन। अत्र अस्मिन् अङ्गदेशे। सखिजनसंगतस्य मित्रवर्गपरिवृतस्य। ते तव राजवाहनस्येत्यर्थः। यादृच्छिकेति-यादृच्छिकं दैवसंयोगाज्जातं यद्दर्शनं ते तव आनन्दराशिस्तेन लङ्घितमाक्रान्तं चेतो यस्य सः। इत्यन्तं मन्त्रगुप्तस्य वचनम्।

हुआ, कहिये।' स्नेहसे बाचती हुई उसने मुझसे धीरेसे उपर्युक्त बात पूछी। सब मैंने अपनी सभी कृतियां उससे निवेदित कर दीं। फिर उसी शशांकसेनाके मुखसे अपनी सभी कृतियां, जो मेरी प्यारीको आनन्ददायिका थीं, अपनी प्यारीके समीप कहला भेजी तत्पश्चात् अति आदरपूर्वक प्रतिबन्ध रहित यथाविधि कलिङ्गराज की पुत्रीको स्वीकार किया और आन्ध्र तथा कलिङ्गराज भी प्राप्त किया। तत्रः आन्ध्र और कलिङ्ग देशपर शासन करते हुए इस शत्रु को जीतनेकी अभिलाषासे और अङ्गराजको

न्वेता जात इति। तस्य तत्कौशलं स्मितज्योत्स्नाभिषिक्तदन्तच्छदः सह सुहृद्भिरभिनन्द्य चित्रमिदं महामुनेर्वृत्तम्। अत्रैव खलु फलितमतिकष्टं तपः। तिष्ठतु तावन्नर्म। हर्षप्रकर्षस्पृशो: प्रज्ञासत्त्वयोरेष्टमिह स्वरूपम्। इत्यभिधाय पुनः अवतरतु भवान् इति बहुश्रुते विश्रुते विकचराजीवसदृशं दृशं चिक्षेप देवो राजवाहनः।

इति मन्त्रगुप्तचरितं नाम सप्तम उच्छ्वासः।

(२२) तस्य मन्त्रगुप्तस्य। तत् पूर्ववर्णितम्। कौशलं नैपुण्यम्। अभिनन्द्येत्यस्य कर्म। स्मितेति–स्मितस्य मन्दहासस्य ज्योत्स्नया किरणेन अभिषिक्तौ अनुलिप्तौ दन्तच्छदौ ओष्ठाधरौ यस्य तादृशः इति राजवाहन इत्यग्रिमेणान्वयः। चित्रं–विस्मयकरम्। महामुनेः महातापसस्य तापसवेषधारिणो मन्त्रगुप्तस्येत्यर्थः। वृत्तं चरितम्। अत्रैव इह जन्मन्येव। फलितं सिद्धम्। अतिकष्ट–कष्टसाध्यं। नर्म परिहासवाक्यम्। एतावद् यदुक्तं राजवाहनेन तत् परिहाससूचकमेव सांप्रतं परिहासं विहाय तत्त्वमेवोच्यत इत्यत्र तात्पर्यम्। हर्षप्रकर्षेति हर्षस्यानन्दस्य प्रकर्षमाधिक्यं स्पृशत इति तयोः–समधिकानन्दजनकयोः। प्रज्ञासत्त्वयोः बुद्धिबलयोः। स्वरूपम् तत्त्वम्। अवतरतु–स्वचरितवर्णनमारभताम् इत्यर्थः। बहुश्रुते–बहु नानाशास्त्रं श्रुतमधीतं येन तस्मिन्। विश्रुते तन्नामधेये कुमारे, तदुपरीत्यर्थः। विकचं प्रफुल्लं यद् राजीवं कमलं तत्–सदृशं तत्तुल्यां दृशं नयनं चिक्षेप निदधौ। अत्र तस्येत्यारभ्य राजवाहन इत्यन्तं वर्णनं कविनैव कृतमतोऽत्र ओष्ठ्यवर्णप्रयोगो न वैरस्यमावहतीति सहृदयैर्बोध्यम्।

इति बालविबोधिनी व्याख्यायां सप्तम उच्छ्वासः।

सहायताके लिए संग्राम के प्रमुख साधनों (सैन्यादिकों) के सहित यहाँपर आया। यहाँपर मित्रोंसहित आपका दर्शन पाकर आनन्दराशिसे मेरा मन पुलकित हो गया।

(२२) कुमार मन्त्रगुप्तके इस वृत्तको सुनकर सुहृदोंके साथ राजवाहनने मुसकुराते हुए चन्द्रिकासे अभिषिक्त अधरोंद्वारा उस मन्त्रगुप्तका अभिवादन किया और कहा–"इस महामुनिका चरितवृत्त विचित्र है। अति कठिन तपका फल आपको इसी जीवनमें उपलब्ध हो गया। अब परिहास त्याग दिया जाय। आनन्दके आधिक्यको स्पर्श करनेवाला आपके बुद्धिबलका स्वरूप हम वृत्तमें देखा गया। बस्तु"। ऐसी बातें कह कर अपने विकसित पद्म के सदृश नेत्र को विक्षेपित कर देव राजवाहनने नानाशास्त्रनिष्णात विश्रुतसे अपने चरितको प्रारम्भ करनेके लिये कहा।

इस प्रकार सप्तम उच्छ्वासमें बालक्रीडा नामक हिन्दी टीका समाप्त हुई।

॥ श्रीः ॥

# दशकुमारचरितम्



## अष्टमोच्छ्वासः

( १ ) अथ सोऽप्याचचक्षे—'देव, मयापि परिभ्रमता विन्ध्याटव्यां कोऽपि कुमारः क्षुधा तृषा च क्लिश्यन्नक्लेशार्हः कचित्कूपाभ्याशेऽष्टवर्षदेशीयो दृष्टः। स च त्रासगद्गदमगदत्—'महाभाग, क्लिष्टस्य मे क्रियतामार्य, साहाय्यकम्। अस्य मे प्राणापहारिणीं पिपासां प्रतिकर्तुमुदकमुद्धरन्निह कूपे कोऽपि निष्कलो ममैकशरणभूतः पतितः। तमलमस्मि नाहमुद्धर्तुम्' इति।

( २ ) अथाहमभ्येत्य व्रतत्या कयापि वृद्धमुत्तार्य, तं च बालं वंश

---

( १ ) अथ मन्त्रगुप्तकथनानन्तरम्। स विश्रुतनामा कुमारः। विन्ध्याटव्यां विन्ध्यारण्ये। कोऽपि अज्ञातकुलनामा। अक्लेशार्हः क्लेशसहनयोग्यो नेत्यर्थः। कूपाभ्याशे जलाशयसमीपे। अष्टवर्षदेशीयः असमाप्ताष्टवर्षः। सः बालकः। त्रासगद्गदं भयविक्लवं यथा तथा। क्लिष्टस्य क्लेशयुक्तस्य। आर्य पूज्य। साहाय्यकं स्वार्थे कः। प्राणापहारिणीं जीवितनाशिनीम्। प्रतिकर्तुम् अपनोदयितुम्। उद्धरन् निष्कासयन्। निष्कलो वृद्धः। ममैकशरणभूतो मदवलम्बनभूतः। तं कूपपतितं वृद्धम्। अलं समर्थः। उद्धर्तुं कूपान्निष्कासयितुम्। इत्यन्तम् अगददित्यस्य कर्म।

( २ ) अथ तच्छ्रवणानन्तरम्। अभ्येत्य समीपमागत्य। व्रतत्या लतया,

---

( १ ) इसके पश्चात् विश्रुतने कहा—हे देव! विन्ध्याटवीमें इतस्ततः भ्रमण करते हुए मैंने सहसा एक कूपके समीप आठ वरसके बालकको देखा। क्लेशोंको सहन करनेमें अशक्त वह मृदु बालक भूख-प्याससे पीड़ित हो रहा था। मुझे देखकर उसने भयान्वित होकर गद्‌गद स्वरसे कहा—हे महाभाग! इस समय मैं बड़ी आपत्तिमें हूँ। आप मेरी सहायता करें। मुझे प्राणापहारिणी पिपासा सता रही है, उसीके निवृत्यर्थ मैं इस कूपपर आया तो पानी निकालनेके समय मेरे साथका एक वृद्ध इसमें गिर पड़ा। मेरे अतिरिक्त उसका कोई सहायक भी नहीं है और मुझमें इतना पौरुष नहीं कि मैं उसे खींचकर कूपके बाहर निकाल सकूं।

( २ ) तदनन्तर मैंने कुछ लताओंको एकत्र करके उनकी सहायतासे उस बूढ़ेको

नालीमुखोद्धृताभिरद्भिः फलैश्च पञ्चषैः शरक्षेपोच्छ्रितस्य लकुचवृक्षस्य शिखरात्पाषाणपातितैः प्रत्यानीतप्राणवृत्तिमापाद्य, तरुतलनिषण्णस्तं जरन्तमप्राक्षम्—'तात, क एष बालः, को वा भवान्, कथं चेयमापदापन्ना' इति।

( २ ) सोऽश्रुगद्गदमगदत्—'श्रूयतां महाभाग! विदर्भो नाम जनपदः तस्मिन्भोजवंशभूषणम्, अंशावतार इव धर्मस्य, अतिसत्त्वः, सत्यवादी, वदान्यः, विनीतः, विनेता प्रजानाम्, रञ्जितभृत्यः, कीर्तिमान्, उदग्रः, बुद्धिमूर्तिभ्यामुत्थानशीलः, शास्त्रप्रमाणकः, शक्यभव्य-

---

रज्जुमुत्तयेत्यर्थः। उद्धार्य उद्धृत्य। वंशनालीति—वंशस्य नाली अन्तश्छिद्रं वेणुर्वा तस्या मुखमग्रभागस्तेनोद्धृताभिर्निष्कासिताभिः। अद्भिर्जलैः। पञ्च षड्वा प्रमाणमेषां तैः पञ्चषैः। शरक्षेपो बाणगतिः, यावद्बाणा गच्छन्तीत्यर्थः। शरक्षेपादप्युच्छ्रितस्योन्नतस्य। शिखरात् अग्रदेशात्। पाषाणपातितैः प्रस्तरनिक्षेपेणावच्छिन्नैः। फलैरित्यस्य विशेषणम्। करणभूतैः तैः प्रत्यानीता पुनरानीता प्राणवृत्तिर्जीवनयोगो यस्य तम्। आपाद्य कृत्वा। जरन्तं वृद्धम्।

( २ ) सः वृद्धः। जनपदः देशः। अस्तीति शेषः। अंशावतारः—अंशेनैकदेशेन अवतारः न तु पूर्ण इत्यर्थः। अतिसत्त्वः समधिकबलवान् सत्त्वगुणप्रधानो वा। वदान्यो दानशीलः। विनेता शिक्षादाता। रञ्जितभृत्यः अनुरक्तसेवकः। बुद्ध्या मूर्त्या आकारेण चोत्थानशीलः पौरुषस्वभावः। शक्यं स्वसाध्यं भव्यं मङ्गलजनकं कल्पं विधिम् आरभत इति शक्यभव्यकल्पारम्भी। संभावयिता मानयिता

---

खींचकर उस कूपके बाहर निकाला तथा बांस की नलीद्वारा जल खींचकर उस बालक को पीनेको दिया जिससे उसकी प्यास बुझी। इसके पश्चात् मैंने बाणों और पत्थरोंकी सहायतासे लकुच वृक्षसे पांच छः फल तोड़कर उन दोनों को खिलाये जिससे उन दोनों की क्षुधा निवृत्त हुई। पुनः हम सब एक वृक्षकी छायामें आ बैठे और मैंने उस वृद्धसे प्रश्न किया—हे तात! यह बालक कौन है? आप कौन हैं? यहाँ कैसे आये? कैसे इस आपत्तिमें फँस पड़े? मेरे प्रश्नों को श्रवण कर उस बूढ़ेके नेत्रोंमें आँसू आ गये और वह गद्गद कण्ठसे कहने लगा—

( २ ) हे महाभाग! विदर्भ नामका एक देश है। उसमें भोजवंशका भूषण पुण्यवर्मा नाम का एक शासक रहता था जो धर्मका अवतार, सत्यवादी, अप्रमेय शक्ति, विनय-भावसम्पन्न, दानी, प्रजापालक, यशस्वी, अपने दासोंको प्रसन्न रखनेवाला, उन्नतिशील, शास्त्रपर श्रद्धा रखनेवाला, अपनी बुद्धि द्वारा तथा अपनी देह द्वारा प्रजाकी निरन्तर उन्नति करनेवाला, विद्वानोंकी पूजा करनेवाला, सेवकोंका

कल्पारम्भी, संभावयिता बुधान्, प्रभावयिता सेवकान्, उद्भावयिता बन्धून्, न्यग्भावयिता शत्रून्, असंबद्धप्रलापेष्वदत्तकर्णः, कदाचिदप्यवितृष्णो गुणेषु, अतिनदीष्णः कलासु, नेदिष्ठो धर्मार्थसंहितासु, स्वल्पेऽपि सुकृते सुतरां प्रत्युपकर्ता, प्रत्यवेक्षिता कोशवाहनयोः, यत्नेन परीक्षिता सर्वाध्यक्षाणाम्, उत्साहयिता कृतकर्मणामनुरूपैर्दानमानैः, सद्यः प्रतिकर्ता दैवमानुषीणामापदाम्, षाड्गुण्योपयोगनिपुणः, मनुमार्गेण प्रणेता चातुर्वर्ण्यस्य पुण्यश्लोकः पुण्यवर्मा नामासीत् ।

(४) स पुण्यैः कर्मभिः प्राप्य पुरुषायुषम्, पुनरपुण्येन प्रजानाम-

---

विना सत्कर्ता । प्रभावयिता प्रभुत्वकारकः । उद्भावयिता संवर्द्धकः । न्यग्भावयिता जेता । असंबद्धप्रलापेषु निरर्थकवचनेषु । अवितृष्णो विरागरहितः, सर्वदा गुणानुरक्त एवेत्यर्थः । अतिनदीष्णः परमपटुः । नेदिष्ठोऽतिसमीपवर्ती, सर्वदैव तत्र संलग्न इति भावः । सुकृते केनापि कृते उपकारे । सुतरामतिशयेन । प्रत्यवेक्षिता । अनुसन्धानकर्ता । परीक्षिता परीक्षकः । सर्वाध्यक्षाणां प्रधानकर्मकर्तॄणाम् । कृतं निष्पादितं कर्म कार्यं यैस्तेषाम् । प्रतिकर्ता शमयिता । षाड्गुण्यं सन्धिविग्रहादिः तेषामुपयोगे विविच्य प्रयोगे निपुणः कुशलः । मनुमार्गेण मनूक्तपद्धत्या । पुण्यश्लोकः पवित्रकीर्त्तिः ।

(४) सः पुण्यवर्मा । पुण्यैः कर्मभिः, यज्ञदानादिभिः । पुरुषायुषं पूर्णमायुः, शतं वर्षाणीति यावत् । प्राप्य लब्ध्वा । प्राप्येति पाठे जीवित्वेत्यर्थः । अपुण्येन

---

प्रभाववर्द्धक, बन्धुओंकी सहायता करनेवाला, शत्रुओंका दमन करनेवाला तथा कार्यकुशल था। वह कभी असम्बद्ध तथा व्यर्थ बातोंपर ध्यान ही नहीं देता था। गुणोंकी प्राप्तिमें सदा वह तत्पर रहता था। सभी कलाओंका वह परिज्ञाता था। धर्म और अर्थका संग्रह करनेमें वह सदा प्रयत्नशील रहता था। यदि कोई उसका थोड़ा भी उपकार कर देता था तो उसके लिये वह अत्यधिक प्रत्युपकार करता था। अपने कोश और वाहनोंपर सदा दृष्टि रखता था। अपने समस्त कर्मचारियोंकी गुप्तरूपसे परीक्षा किया करता था। कार्यदक्ष लोगोंके पदोंकी अभिवृद्धि करता हुआ उन्हें पुरस्कृत करता रहता तथा सदा अर्थकी सहायतासे उनको सन्तुष्ट रखता था। सन्धि, विग्रह, यान, आसन, आश्रय, द्वैधीभाव इन छहों गुणोंका वह विधिवत् पालन करता था। मनुस्मृतिके अनुसार चारों वर्णोंके तथा चारों आश्रमोंके धर्मोंका पालन प्रजासे करवाता था। उसकी पवित्र कीर्ति समस्त भूतलपर छायी हुई थी।

(४) उसने मानवीय अवस्थाका सुख पूर्णरूपेण भोगा और अन्तमें वह प्रजाके

गण्यतामरेषु। तदनन्तरमनन्तवर्मा नाम तदायतिरवनिमध्यतिष्ठत्। स सर्वगुणैः समृद्धोऽपि दैवाद्दण्डनीत्यां नात्याद्दतोऽभूत्। तमेकदा रहसि वसुरक्षितो नाम मन्त्रिवृद्धः पितुरस्य बहुमतः प्रगल्भवागभाषत।

(५) 'तात, सर्वैवात्मसंपदभिजनात्प्रभृत्यन्यूनैवात्रभवति लक्ष्यते। बुद्धिश्च निसर्गपटवी, कलासु नृत्यगीतादिषु चित्रेषु च काव्यविस्तरेषु प्राप्तविस्तरा तवेतरेभ्यः प्रतिविशिष्यते। तथाप्यसावप्रतिपद्यात्मसंस्कारमर्थशास्त्रेषु, अनग्निसंशोधितेव हेमजातिर्नातिभाति बुद्धिः। बुद्धिहीनो

---

पापेन, दुर्भाग्येनेति यावत्। अमरेषु अगण्यत स्वर्गमगच्छत्। तदायति —तस्मात् पुष्पवर्मण आयतिः प्रभावो यस्य सः। तत्पुत्र इत्यर्थः। स्यात्प्रभावेऽपि चायतिरित्यमरः। दण्डनीत्यां राजनीतौ। अत्याद्दत आदृतवान्। बहुमतः सम्मानितः। प्रगल्भवाक् वाक्पटुः।

(५) आत्मसात् पुरुषगुणपरम्परा। अभिजनात्प्रभृति कुलक्रमानुसारेण। अन्यूना अहीना। अत्रभवति त्वयि। निसर्गेति—निसर्गात् स्वभावात् पटवी पटुः। चित्रेषु नानाविधेषु। प्राप्तविस्तरा लब्धप्रसरा। प्रतिविशिष्यते विशिष्टा स्ति। असौ बुद्धिः। अप्रतिपद्य अप्राप्य। आत्मसंस्कारं वासनाम्। अर्थशास्त्रेषु दण्डनीत्यादिषु। अनग्निशोधितेति-अनग्निशोधितं सुवर्णं यथा न शोभते तथा संस्काररहिता। बुद्धिरपीत्यर्थः। अत्युच्छ्रित आयुन्नत। परैः शत्रुभिः।

---

पापोंके कारण स्वर्गके देवगणोंमें जाकर मिल गया। इसके पश्चात् उसका पुत्र अनन्तवर्मा राजसिंहासनपर बैठा। यद्यपि अनन्तवर्मा सभी राजगुणोंसे परिपूर्ण था परन्तु, दुर्भाग्यवश उसकी नीतिसे लोग असन्तुष्ट थे और उसका आदर नहीं करते थे। एक दिन उसके पिताके द्वारा सम्मानित वृद्ध मन्त्री वसुरक्षितने अनन्तवर्माको एकान्त स्थलमें ले जाकर कहा—

(५) हे तात! स्ववंशानुसार आपमें सभी गुण वर्तमान हैं। स्वभावसे ही आप बुद्धिमें तीक्ष्ण हैं। औरोंकी अपेक्षा आपमें नृत्य, गीत, काव्यकला, चित्र-चातुर्य भी अधिक है। परन्तु, इन सबके रहते हुए भी आपकी प्रतिभा अर्थशास्त्रके तत्त्वान्वेषणमें असफल है। अतः इसकी शोभा उसी प्रकार हीन लग रही है जैसे अग्निमें बिना तपा हुआ सुवर्ण शोभाहीन रहता है। बुद्धिरहित राजा कितना ही बड़ा क्यों न हो, उसके रिपुगण उसे भीतर ही भीतर खोखला बना देते हैं। यद्यपि ऊपरसे देखनेमें यह बात ज्ञात नहीं होती परन्तु सूक्ष्मतासे ज्ञात हो जाता है। बुद्धिके न होनेसे वह राजा अपने साध्य-साधनोंका विभाग करनेमें असमर्थ रहता है। जो राजा राज्यपदके अनुकूल आचरण नहीं करता

हि भूभृदत्युच्छ्रितोऽपि परैरध्यारुह्यमाणमात्मानं न चेतयते । न च शक्तः साध्यं साधनं वा विभज्य वर्तितुम् । अयथावृत्तश्च कर्मसु प्रतिहन्यमानः स्वैः परैश्च परिभूयते न चावज्ञातस्याज्ञा प्रभवति प्रजानां योगक्षेमाराधनाय । अतिक्रान्तशासनाश्च प्रजा यत्किंचनवादिन्यो यथाकथंचिद्वर्तिन्यः सर्वाः स्थितीः संकिरेयुः । निर्मर्यादश्च लोको लोकादितोऽमुतश्च स्वामिनमात्मानं च भ्रंशयते । आगमदीपदृष्टेन खल्वध्वना सुखेन वर्तते लोकयात्रा । दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति । तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्ध एव जन्तुः

अध्यारुह्यमाणम् आक्रम्यमाणम् । चेतयते ज्ञातुं प्रभवति । शक्तः समर्थः । साध्यं कार्यम्, साधनं कारणम्, अथवा साध्यं विपक्षभूतं साधनं सपक्षभूतम् । विभज्य निर्णीय । अयथावृत्तः योग्यचरित्रहीनः । कर्मसु कार्येषु । प्रतिहन्यमानः प्रतिरुध्यमानः । परिभूयते अवज्ञायते । अलब्धस्य लाभो योगः, लब्धस्य संरक्षणं क्षेमस्तयोराराधनाय साधनाय अतिक्रान्तं लङ्घितं शासनं नृपादेशो याभिस्ताः । यत्किञ्चनवादिन्यः अनियन्त्रितभाषिण्यः । यथाकथञ्चिद्वर्तिन्यः यथेच्छं विहरन्त्यः । स्थितीः मर्यादाः । संकिरेयुः विशृङ्खलयेयुः । इतो लोकात् । अमुतः परलोकात् । भ्रंशयति पातयति । आगमः शास्त्रमेव दीपस्तेन दृष्टेन । वर्तते सम्पद्यते । लोकयात्रा लोकस्थितिः । व्यवहिता विषयान्तरेणाच्छादिताश्च विप्रकृष्टा असन्निहितास्तेषु । अप्रतिहताऽकुण्ठिता वृत्तिः प्रसरो यस्य तत् । चक्षुषा सर्वं द्रष्टुं न प्रभवन्ति जीवाः शास्त्ररूपं दिव्यं चक्षुर्न कुत्रापि प्रतिहतं भवतीति भावः । तेन शास्त्रचक्षुषा । सतोः वर्तमानयोः । शत्रन्तादस्धातोः सप्तमीद्विवचने रूपम् । आयतविशालयोः दीर्घम-

उसे अपने-पराये शत्रु एक न एक दिन अवश्य धर दवाते हैं। ऐसी दशामें वह राजा प्रजासे तिरस्कृत हो जाता है तथा तिरस्कृत राजाकी आज्ञाओंका कोई भी पालन नहीं करता है। तब वह राजा जनताके योग-क्षेमकी व्यवस्था करनेमें अशक्त हो जाता है। ऐसी परिस्थिति होनेपर राजाज्ञाओंका उल्लङ्घन करके प्रजा मनमाने मार्गसे सभी नियमोंको तोड़कर चलने लगती है। नियमविरुद्ध चलनेवाली प्रजा अपनेको, राजाको और राज्यको नष्ट-भ्रष्ट कर डालती है। धर्मशास्त्ररूपी दीपकके प्रकाशमें चलनेसे राजा-प्रजाका जीवन बड़े सुखमें व्यतीत होता है। धर्मशास्त्र दिव्य दृष्टिके समान है जो दृष्टि वर्तमान, भूत और भविष्य तथा अज्ञातावश न दिखायी देनेवाले सभी पदार्थोंतक अप्रतिहत गतिसे पहुँच जाती है, कहीं रुकती नहीं है। सुन्दर तथा विशाल नेत्रोंवाले भी अन्धेके समान हैं यदि उनके पास उक्त धर्मशास्त्ररूपी दृष्टि नहीं है, क्योंकि कार्य तथा अकार्यका विचार

र्थदर्शनेष्वसामर्थ्यात्। अतो विहाय बाह्यविद्यास्वभिषङ्गमागमय दण्डनीतिं कुलविद्याम्। तदर्थानुष्ठानेन चावर्जितशक्तिसिद्धिरस्खलितशासनः शाधि चिरमुदधिमेखलामुर्वीम्' इति।

(६) एतदाकर्ण्य 'स्थान एव गुरुभिरनुशिष्टम्। तथा क्रियते' इत्यन्तःपुरमविशत्। तां च वार्तां पार्थिवेन प्रसङ्गेनोदीरितामुपनिशम्य समीपोपविष्टश्चित्तानुवृत्तिकुशलः प्रसादवित्तो गीतनृत्यवाद्यादिष्वबाह्यो बाह्यनारीपरायणः पटुरयन्त्रितमुखो बहुभङ्गिविशारदः परमर्मान्वेषणपरः परिहासयिता परिवादरुचिः पैशुन्यपण्डितः सचिवमण्डलादप्युत्कोचहारी सकल-

इतो। अनुर्जीव। अर्थदर्शनेषु विषयज्ञानेषु। बाह्यविद्यासु नीतिविद्येतरविद्यासु। अभिषङ्गमासक्तिम्। आगमय प्रापय। आवर्जिता प्राप्ता शक्तिः सामर्थ्यं सिद्धिः कार्यसिद्धिश्च येन सः। अस्खलितशासनः अप्रतिहताज्ञः। शाधि पालयेत्यर्थः। अनुशासनार्थकशासधातोर्लोटि मध्यमपुरुषैकवचने रूपम्। उदधिः समुद्रो मेखला रशना यस्यास्तां ससागरामित्यर्थः। उर्वीं पृथ्वीम्।

(६) स्थाने युक्तम्। प्रसादवित्तः राज्ञः प्रसादेन वित्तः प्रसिद्धः अथवा प्रसाद एव वित्तं धनं यस्य सः, राजप्रसादोपजीवीत्यर्थः। अबाह्यः बहिर्भूतो न, सर्वकलैकदेशज्ञ इत्यर्थः। बाह्यनारीपरायणो वेश्यासक्तः। अयन्त्रितमुखः। असंयतमुखः—वाच्यावाच्यज्ञानहीनो बहुभाषी वा। बहुभङ्गिविशारदः वक्रोक्तिचतुरः। परस्य मर्मान्वेषणे गोप्यविषयानुसन्धाने परस्तत्परः, परच्छिद्रान्वेषणपरायणो वा। परिवादरुचिः परनिन्दारसिकः। पैशुन्यं खलता तत्र पण्डितः। सचिवमण्डलात् मन्त्रिसमूहादपि

धर्मशास्त्रज्ञान बिना नहीं हो सकता, अतः आप बाहरकी सभी विद्याओंकी ओरसे चित्त हटाकर अपने वंशकी विद्याओं तथा दण्डनीतिकी ओर चित्त लगावें और उसे सीखनेका प्रयास करें। यदि आप उस दण्डनीति प्रतिपादित मार्गसे कार्यसाधनकी ओर अग्रसर होंगे तो समस्त सिद्धियाँ तथा शक्तियाँ आपतक स्वयमेव दौड़ आयेंगी तथा शासनकार्यमें न कभी त्रुटि होगी और न किसीका भय रहेगा। मेरी इस सम्मतिको मानकर आप समुद्रवसना पृथ्वीका दीर्घकालतक शासन कीजिये।

(६) मन्त्रीकी बात सुनकर अनन्तवर्माने कहा—'हे सचिववर! आपका उपदेश युक्तिपूर्ण तथा शिरोधार्य है, मैं इसका पालन करूँगा।' ऐसा कहकर वह अन्तःपुरमें चला गया। वहाँ पर नृत्य-गीतादि के प्रसंगमें उसने अपने बूढ़े मन्त्रीके उपदेशकी चर्चा कर दी। उस चर्चाको अनन्तवर्माके एक सेवक विहारभद्रने सुन लिया क्योंकि वह भी उस समय वहीं पर विद्यमान था। विहारभद्र दूसरोंके भावोंको जाननेमें पटु था तथा

दुर्नयोपाध्यायः कामतन्त्रकर्णधारः कुमारसेवको विहारभद्रो नाम स्मितपूर्वं व्यज्ञपयत्—

( ७ ) 'देव, दैवानुग्रहेण यदि कश्चिद्भाजनं भवति विभूतेः, तमकस्मादुच्चावचैरुपप्रलोभनैः कदर्थयन्तः स्वार्थं साधयन्ति धूर्ताः। तथाहि—केचित्प्रेत्य किल लभ्यैरभ्युदयातिशयैराशामुत्पाद्य, मुण्डयित्वा शिरः, बद्ध्वा दर्भरज्जुभिः, अजिनेनाच्छाद्य, नवनीतेनोपलिप्य, अनशनं च शयित्वा सर्वस्वं स्वीकरिष्यन्ति। तेभ्योऽपि घोरतराः पाषण्डिनः पुत्रदार-

---

अन्यजनानु का कथा। उत्कोचहारी गुप्तरूपेण द्रव्यग्रहणपरः। कुमारसेवकः कुमारावस्थामारभ्य राज्ञः सेवकः।

( ७ ) भाजनं पात्रम्। विभूतेः ऐश्वर्यस्य। उच्चावचैर्नानाविधैः। कदर्थयन्तो गर्हयन्तः। केचित् केचन धूर्ताः। स्वीकरिष्यन्तीत्यनेनान्वयः। प्रेत्य मरणानन्तरम्। अजिनेन मृगचर्मणा। सर्वस्वम् अन्यस्य सब धनम्। स्वीकरिष्यन्ति ग्रहीष्यन्ति। यज्ञदीक्षितस्य शिरोमुण्डनं कुशरज्जुभिर्वेष्टन, मृगचर्माच्छादनमनशनञ्च प्रसिद्धमेव। तेभ्यो धूर्तेभ्योऽपि पाषण्डिनः भ्रष्टाः। पुत्रदारेति पुत्रदारादीन्यकिञ्चित्कराणि धर्म एवाश्रयणीय इत्यादि कथयित्वा जनान् स्वस्वपुत्रकलत्रा-

---

राजाकी उसपर दया भी रहती थी। वह वाद्य-नृत्य-गीतादि विद्याओंमें पारंगत, वेश्यागामी, व्यंग्य बोलनेमें कुशल, मुँहफट तथा अन्योंके रहस्यभेद जाननेमें प्रवीण, परनिन्दामें तत्पर और चुगलखोर एवं मन्त्रिमण्डलोंसे भी घूस लेनेमें दक्ष, लम्पटों तथा दुष्टोंका मुखिया, कामतन्त्रवेत्ता, नायक-नायिकाको मिलानेमें पाखट और निपुण था। उसने राजाकी समस्त बातें श्रवण कर हँसते हुए कहा—

( ७ ) हे देव! सौभाग्यसे यदि कोई धनिक हो जाता है तो वृथा ही धूर्तगण उसे इधर-उधरकी बातें बताकर उसके मस्तिष्कको बिगाड़कर अपना स्वार्थसाधन करते रहते हैं। कितने धूर्त तो ऐसे भी होते हैं जो सीधे-सादे धनिकको अपनी कपटकला द्वारा फँसाकर उसके चित्तमें ऐसी आशा जमाते हैं कि वह मृगचर्मकी लँगोटी धारण कर कई दिनोंतक उपवास करने लगता है और फिर धीरे धीरे समय पाकर वे धूर्त उसका सर्वस्व हरण कर लेते हैं। जो धूर्त इन कथित धूर्तोंसे और अधिक बढ़े होते हैं वे तो स्त्री, पुत्र, भाई आदि में भी पार्थक्य करा देते हैं; यहाँ तक कि शरीर और जीवन तकसे विभेद कराकर अपना स्वार्थ सिद्ध कर लेते हैं। यदि कोई पटु शिष्य उन धूर्तोंके बताये मार्गसे नहीं चलता और अपनी हस्तगत सम्पत्ति नहीं नष्ट करता है तो उसके समीप और अनेक धूर्तराट् आ जाते हैं और आकर उपदेश देने लगते हैं—मैं एक कौड़ीसे लाखों रुपये बना सकता

शरीरजीवितान्यपि मोचयन्ति । यदि कश्चित्पटुजातीयो नास्यै मृगतृष्णिकायै हस्तगतं त्यक्तुमिच्छेत् तमन्ये परिवार्याहुः—एकामपि काकिणीं कार्षापणलक्षमापादयेम, शस्त्रादृते सर्वशत्रून्घातयेम, एकशरीरिणमपि मर्त्यं चक्रवर्तिनं विदधीमहि यद्यस्मदुद्दिष्टेन मार्गेणाचर्यते' इति ।

(८) स पुनरिमान्प्रत्याह—'कोऽसौ मार्गः' इति । पुनरिमे ब्रुवते—'ननु चतस्रो राजविद्यास्त्रयी वार्तान्वीक्षिकी दण्डनीतिरिति । तासु तिसृषु त्रयीवार्तान्वीक्षिकीषु महत्यो मन्दफलाश्च तास्तावदासताम् । अधीष्व तावद्दण्डनीतिम् । इयमिदानीमाचार्यविष्णुगुप्तेन मौर्यार्थे षड्भिः श्लोकसहस्रैः संक्षिप्ता । सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्मक्षमा' इति ।

---

णीनि त्याजयन्तीति भावः । पटुजातीयः चतुरसदृशः । प्रकारवचने जातीयर् प्रत्ययः । अस्यै अनन्तरोक्तायै । मृगतृष्णिकायै मरीचिकायै । निमित्ते चतुर्थी । हस्तगतं धनमिति शेषः । तं पटुजातीयम् । अन्ये अपरे राजनीतिज्ञा इति भावः । काकिणी वराटिकानां विंशतिः । पणचतुर्थोऽश इत्यर्थः । कार्षापणः षोडश पणाः । आपादयेम उत्पादयेम । अर्थशास्त्रबलात् एकयाऽपि काकिण्या कार्षापणलक्षमर्जयितुं प्रभवति नर इति भावः । शस्त्रादृते शस्त्रं विना । कूटनीत्या विना युद्धं शत्रुनाशो भवतीत्यर्थः । एकशरीरिणम् एकाकिनं पुरुषम् । मर्त्यानां मनुष्याणां चक्रे मण्डले समूहे वा वर्तते प्राधान्येन वर्तते इति तथा । विदधीमहि कर्तुं शक्नुयाम । अस्मदुद्दिष्टेन अस्माभिः प्रदर्शितेन । आचर्यते अनुष्ठीयते त्वयेति शेषः ।

(८) त्रयी वेदः । वार्ता अर्थशास्त्रम् । आन्वीक्षिकी न्यायशास्त्रम् । मन्दफलाः निष्फलप्रायाः । आसताम् तिष्ठन्तु । आस् उपवेशने इत्यस्य धातोर्लोटि रूपम् । इयं दण्डनीतिः । आचार्यविष्णुगुप्तेन चाणक्येन । मौर्यार्थे चन्द्रगुप्तकृते । अनुष्ठीयमाना आचर्यमाणा । यथोक्तकर्मक्षमा पूर्वप्रतिपादितकार्यकरणसमर्था ।

---

हूँ । बिना शस्त्र उठाये ही सब शत्रुगणोंको जीत सकता हूँ । केवल एक शरीर मात्रधारी निर्धनको भी चक्रवर्ती सम्राट् बना सकता हूँ । परन्तु ये सब बातें तभी होंगी जब मेरे बताये गये मार्गका वह व्यक्ति अनुसरण करे ।

(८) यदि उस धूर्तसे इन लम्बी चौड़ी बातोंपर विश्वास करके कोई पूछता है कि 'अन्ततोगत्वा आपका वह कौनसा मार्ग है' तो वे कहते हैं—चार प्रकारकी राजविद्याएँ होती हैं । त्रयी ( ऋग्, यजु, साम ), वार्ता ( कृष्यादि कर्म ), आन्वीक्षिकी ( न्यायशास्त्र ) और दण्डनीति ( अर्थशास्त्र ) । इनमें भी तीन विद्याएँ तो अति परिश्रम से प्राप्त होती हैं परन्तु उनका फल अतिसाधारण है । अतः उनके जानने की आवश्यकता नहीं

(९) स 'तथा' इत्यधीते । शृणोति च । तत्रैव जरां गच्छति । तत्तु किल शास्त्रं शास्त्रान्तरानुबन्धि । सर्वमेव वाङ्मयमविदित्वा न तत्त्वतोऽधिगंस्यते । भवतु, कालेन बहुनाल्पेन वा तदर्थाधिगतिः । अधिगतशास्त्रेण चादावेव पुत्रदारमपि न विश्वास्यम् । आत्मकुक्षेरपि कृते तण्डुलैरियद्भिरियानोदनः संपद्यते । इयत ओदनस्य पाकायैतावदिन्धनं पर्याप्तमिति मानोन्मानपूर्वकं देयम् । उत्थितेन च राज्ञा क्षालिताक्षालिते मुखे

(९) तथा तथैवास्तु । तत्रैव दण्डनीत्यध्ययने । जरां गच्छति—वृद्धत्वं प्राप्नोति । शास्त्रान्तरानुबन्धि—अन्यशास्त्रापेक्षि । वाङ्मयं शास्त्रम् । तत्त्वतो याथातथ्येन । अधिगंस्यते—सम्यग् ज्ञानं भविष्यति । तदर्थाधिगतिः—तदर्थबोधः । अधिगतं सम्यग् ज्ञातं शास्त्रं येन तेन; अनेनेति शेषः । आदावेव प्रथममेव । विश्वास्यं विश्वसनीयम् । आत्मकुक्षेः स्वोदरस्य । कृते निमित्तम् । इयद्भिः इयत्परिमाणैः । इयान् इयत्परिमाणः । इयतः इयत्परिमाणस्य । एतावत् एतत्परिमाणम् । इन्धनं काष्ठम् । मानं प्रस्थादिकृतम्, उन्मानं तुलादण्डकृतम्, तत्पूर्वकम्, प्रस्थेन तुलया वा परिमाप्येति भावः । उत्थितेन शय्याया इति शेषः । क्षालिताक्षालिते—कार्यत्वरया किञ्चित् क्षालिते किञ्चिदक्षालिते मुखे—इत्यस्य विशेषणम् । अभ्यन्तरीकृत्य

है । तुम उनको छोड़कर दण्डनीतिका ही अध्ययन करो । इस विद्याको आचार्य विष्णुगुप्त तथा चाणक्यने अपने-अपने शिष्योंको अर्थात् यथाक्रम राजपुत्रोंको और चन्द्रगुप्त मौर्यको समझानेके लिये केवल छः सहस्र श्लोकोंमें ही रच दिया है । बस, यदि इसे तुम जान लो और इसके अनुसार चलो तो जो चाहोगे सो प्राप्त कर लोगे—सब सिद्धियाँ इसीमें निहित हैं ।

(९) उस धूर्तके इस उपदेशपर जब शिष्य कह देता है कि 'मैं ऐसा ही यथावत् करूँगा' तथा वह दण्डनीति पढ़ने एवं सुनने लगता है तो केवल उसी दण्डनीतिको जानते-जानते वह वृद्ध हो जाता है और फिर भी उसे कुछ लाभ नहीं होता । जब वह शिष्य दण्डनीतिके मन्थनमें घबड़ाता है तो धूर्त उसे समझाता है और कहता है—देखो, एक शास्त्रका सम्बन्ध दूसरे शास्त्रसे होता है अतः जब तक तुम सकल शास्त्र न पढ़ोगे तब तक कुछ लाभ न होगा—कुछ समझमें न आवेगा ।

मान लो, कुछ समय माथापच्ची करके दण्डनीति कुछ समझमें आ भी गयी तो क्या ! उस दण्डनीतिका प्रथम उपदेश है कि अपनी पत्नी और पुत्र पर भी विश्वास न करो । एक आदमीका पेट भरनेके लिए इतने चावलोंसे इतना भात तैयार होता है । इतना चावल पकानेमें इतनी लकड़ी लगती है अतः उतना चावल और लकड़ी नाप-जोखकर रसोईदारको देना चाहिये । सूर्योदयसे पहले उठकर राजाको आय-व्यय समझना

मुष्टिमर्धमुष्टिं वाभ्यन्तरीकृत्य कृत्स्नमायव्ययजातमह्नः प्रथमेऽष्टमे वा भागे श्रोतव्यम् । शृण्वत एवास्य द्विगुणमपहरन्ति तेऽध्यक्षधूर्ताः श्चत्वारिंशतं चाणक्योपदिष्टानाहरणोपायान्सहस्रधात्मबुद्ध्यैव ते विकल्पयितारः ।

( १० ) द्वितीयेऽन्योन्यं विवदमानानां जनानामाक्रोशाहन्यमानकर्णः कष्टं जीवति । तत्रापि प्राड्विवाकादयः स्वेच्छया जयपराजयौ विदधानाः, पापेनाकीर्त्या च भर्तारमात्मनश्चार्थैर्योजयन्ति । तृतीये स्नातुं भोक्तुं च न लभते । भुक्तस्य यावदन्नपरिणामस्तावद् विषभयं न शाम्यत्येव ।

निविश्य गिलित्वेति भावः । शृण्वत इति अनादरे षष्ठी । शृण्वन्तं तमनादृत्य तस्यैव समक्षमित्यर्थः । अध्यक्षधूर्ताः धूर्ताः अधिकारिणः । चत्वारिंशतमित्यादि–चाणक्येन चत्वारिंशत्संख्यका एवाहरणोपाया उपदिष्टास्ते तु स्वबुद्धिबलेन सहस्रप्रकारानाहरणोपायान् कल्पयेयुरित्यर्थः ।

( १० ) द्वितीये दिवसस्य द्वितीयभागे । आक्रोशात् चीत्कारशब्दात् । प्राड्विवाक व्यवहारद्रष्टा 'जज' इति भाषा । पापेनेत्यादि–पापेन निन्दया च भर्तारं स्वामिनं योजयन्ति आत्मनः स्वान् अर्थधनैर्योजयन्ति । तृतीये तृतीयभागे । अन्नसामग्र्याः परिणामः परिपाकः । विषभयमिति । नृपस्य विनाशाय शत्रवोऽन्नेन सह विषप्रदानं कुर्वन्तीति प्रसिद्धम् । हिरण्यप्रतिग्रहाय प्रसार्यो धनग्रहणाय । मन्त्रचिन्तया अमात्यैः सह मन्त्रणायाम् । आयासं क्लेशम् । अन्यथा उदासीना । सम्भूय मिलित्वा । दोषगुणावित्यादि द्वितीयान्तपदानि विपरिवर्तयन्त इत्यस्य

पड़ता है, चाहे वह मुँह धोये या न धोये । एक-दो मुट्ठी अन्न खाकर उसे वह कार्य करना ही पड़ता है । वे मूर्ख राजगण आय-व्ययका निरीक्षण चाहे जितना भी करें, किन्तु उनके कपटी अधिकारी दुगुनी तिगुनी रकम हड़प कर ही जाते हैं । चाणक्य ऋषिने दूसरोंका धन अपहरण करनेकी चार युक्तियां बतायी हैं । किन्तु वे धूर्त अपनी युक्तियोंसे उसे सहस्रों प्रकारकी कर देते हैं ।

( १० ) पारस्परिक मनमुटावसे जनताके स्पर्धायुक्त गाली-गलौजवाले, वाक्य राजाओं को मजा सुनने पड़ते हैं । यहाँ तक कि उन कटु वचनोंको श्रवण करते करते सीधे सादे राजाओंके कान भर जाते हैं । इस प्रकार वे राजा बड़े कष्टके साथ अपना जीवन व्यतीत करते हैं । दूसरी बात वे धूर्तगण अपने मनसे अनेक प्रकारके मनगढ़न्त झगड़ोंको खड़े करके जय विजय अथवा हानि-लाभकी बात गढ़कर अनेक प्रकारके पाप एवं दुष्कीर्तिकर कामको करते हुए अपने मूर्ख स्वामीको बदनाम कर अपना स्वार्थ साधते हैं—

चतुर्थे हिरण्यप्रतिग्रहाय हस्तं प्रसारयन्नेवोत्तिष्ठति । पञ्चमे मन्त्रचिन्तया महान्तमायासमनुभवति । तत्रापि मन्त्रिणो मध्यस्था इवान्योन्यं संभूय, दोषगुणौ दूतचारवाक्यानि शक्याशक्यतां देशकालकार्यावस्थाश्च स्वेच्छया विपरिवर्तयन्तः, स्वपरमित्रमण्डलान्युपजीवन्ति । बाह्याभ्यन्तरांश्च कोपान् गूढमुत्पाद्य प्रकाशं प्रशमयन्त इव स्वामिनमवशमवगृह्णन्ति ।

(११) षष्ठे स्वैरविहारो मन्त्रो वा सेव्यः । सोऽस्यैतावान्स्वैरविहार·

कर्माणि । विपरिवर्त्तयन्तः विपर्यासयन्तः । दोषं गुणरूपेण गुणं च दोषरूपेणेत्यर्थः । दूतचारवाक्यादीन्यपि तथैव । स्वपरेति स्वस्य परस्य मित्राणाञ्च मण्डलानि उपजीवन्ति आश्रयन्ते । तेभ्योऽपि धनं गृह्णन्ति । बाह्यान् प्रजाः, आभ्यन्तरान् अमात्यादींश्च । प्रशमयन्तः शान्तिं प्रापयन्तः । अवगृह्णन्ति अनाद्रियन्ते ।

(११) स्वैरविहारः स्वच्छन्दविहरणम् । त्रिपादोत्तराः त्रिपादाधिकाः । नाडिकाः घटिकाः । चतुरङ्गबलस्य हस्त्यश्वरथपदातिलक्षणस्य, प्रत्यवेक्षणं परीक्षणं तस्य प्रयासः क्लेशः । सेनापतिसखस्य सैन्याध्यक्षेण सहेत्यर्थः । शस्त्राग्नीति— शस्त्रेण अग्निना रसेन विषेण च हन्तारः, प्रणिधयो गुप्तदूताः । अनुष्ठेयाः कर्त्तव्याः

खूब धन पैदा करते हैं । नित्य ही राजकाजमें संलग्न रहनेसे राजाओंको नहाने-खाने तकका समय नहीं मिलता है । तीसरी बात—यदि भोजन ठीकसे मिला भी तो उसके ठीकसे न पचनेतक यह चिन्ता बनी रहती है कि कहीं किसीने विष तो नहीं मिला दिया । इसी प्रकार चौथी बात—नित्य ही धनप्राप्तिकी अभिलाषा लिये हुए सोकर उठना पड़ता है । पाचवीं बात—विचार विमर्शकी रात-दिन चिन्तायें लगी रहती हैं और उनसे बड़ा क्लेश होता है । इसपर भी सचिवगण मध्यस्थ बनकर राजदूतों और गुप्तचरोंकी बातोंके अनेक दोष-गुण, सबलता-निर्बलता तथा देश-कालकी स्थितिमें मनमाने परिवर्तन करके अपना और अपने साथियोंका कार्य साधा ही करते हैं । बाह्य एवं आन्तरिक चर्चायें वे लोग राजाओंको सुनाते हैं तथा कभी कभी क्रोधसे परिपूर्ण भी राजाओंको कर देते हैं । यद्यपि ऊपर-ऊपर से वे लोग राजाओंके क्रोधकी शान्ति चाहते हैं परन्तु, वास्तविकमें वे लोग राजाओंको क्रोधाभिभूत तथा मतिहीन करके सदा अपने वशमें किये रहना चाहते हैं और किये रहते भी हैं ।

(११) छठी बात—मनुष्य या तो स्वेच्छापूर्वक विहार कर सकता है या सन्मति आदि परामर्श का बोझ उठा सकता है । दोनों बातें एक ही व्यक्ति नहीं कर सकता । परन्तु उन धूर्त मन्त्रिगणोंकी यह नीति रहती है कि राजाओंको दो-तीन घड़ीसे अधिक स्वेच्छाविहार करनेका समय ही नहीं प्राप्त होता है—इतने झमेलेमें वे फँसाये रहते हैं ।

कालो यस्य तिस्रस्त्रिपादोत्तरा नाडिकाः । सप्तमे चतुरङ्गबलप्रत्यवेक्षणप्रयासः । अष्टमेऽस्य सेनापतिसखस्य विक्रमचिन्ताक्लेशः । पुनरुपास्यैव सन्ध्याम्, प्रथमे रात्रिभागे गूढपुरुषा द्रष्टव्याः । तन्मुखेन चातिनृशंसाः शस्त्राग्निरसप्रणिधयोऽनुष्ठेयाः । द्वितीये भोजनानन्तरं श्रोत्रिय इव स्वाध्यायमारभेत । तृतीये तूर्यघोषेण संविष्टश्चतुर्थपञ्चमौ शयीत किल । कथमिवास्याजस्रचिन्तायासविह्वलमनसो वराकस्य निद्रासुखमुपनमेत । पुनः षष्ठे शास्त्रचिन्ताकार्यचिन्तारम्भः । सप्तमे तु मन्त्रमहो दूताभिप्रेषणानि च, दूताश्च नामोभयत्र प्रियाख्यानलब्धान् अनर्थान् वीतशुल्कबाधवर्त्मनि वणिज्यया वर्धयन्तः, कार्यमविद्यमानमपि लेशेनोत्पाद्यानवरतं भ्रमन्ति ।

प्रयोज्या इति भावः । तूर्यघोषेण नृपस्य शयनसमयसूचकेन वाद्यध्वनिना । संविष्टः शायितः । उपनमेत समीपमागच्छेत् । उभयत्र येन प्रेषितो यदन्तिकं प्रेषितश्च । वीतशुल्केति—वीता राजकीयपुरुषोऽयमिति कृत्वा अपगता शुल्कस्य भाषायां 'महसूल' इति ख्यातस्य बाधा यत्र तादृशे वर्त्मनि मार्गे । लेशेन कपटेन ।

सातवीं बात—राजाओंको निरन्तर अपनी चतुरंगिणी सेनाका निरीक्षण करते रहनेका प्रयास करना पड़ता है । आठवीं बात—राजाओंको यह परमावश्यक होता है कि वे प्रधान सेनापतिको अपना मित्र बनाये रहें तथा अपनी शक्ति बढ़ानेकी सदा चेष्टायें करते रहें । सायंकालमें सन्ध्या पूजनसे निवृत्ति प्राप्त करके रातके पहले पहरमें ही गुप्तचरोंसे वार्तालाप करनी चाहिए । तथा उनके कार्यों को देखना चाहिए । उनके द्वारा क्रूर, दुराचारियों के शस्त्रप्रहार, अग्निदाहकों या विषदाताओं एवं पापियों की गूढ़ चेष्टाओं का प्रतिकार कराना चाहिये । ज्योंही भोजनसे निवृत्ति पावें त्योंही वेदपाठियोंके समान पुस्तकें लेकर शास्त्रोंका मनन करें । संगीत एवं तुरही आदि बाजोंके कोलाहलोंके कारण राजाओंको केवल चार पाँच घड़ी सोनेके लिए प्राप्त होता है । इस कथित प्रकारसे जिनके चित्त नित्य क्लेश एवं चिन्ताओंसे पूर्ण रहेंगे, भला वे कैसे सुखकी नींद सो सकते हैं ! ज्योंही वे सोकर उठते हैं त्योंही उन्हें शास्त्रों और राजकार्योंकी चिन्तायें सताने लगती हैं । सचिवोंके साथ विचारविनिमय करके दूतोंको भेजनेके झमेले उनके समक्ष आकर उपस्थित होते हैं । वे दूत भी राजा प्रजा दोनोंमें मीठी मीठी बातें करके कहींसे धन लेते हैं तो कहीं चुङ्गीका महसूल माफ करा देते हैं और कहीं किसी वस्तुका व्यापार स्वयं ही करके अपना स्वार्थ साधते हैं । वास्तव में जिनकी कोई आवश्यकता भी नहीं होती उन छोटी-छोटी बातोंको वे लोग बढ़ा चढ़ाकर अपने कार्यसाधनकी नित्य-नयी, व्यवस्था किया करते हैं तथा अपना कार्य निकाल लेते हैं ।

( १२ ) अष्टमे पुरोहितादयोऽभ्येत्यैनमाहुः—'अद्य दृष्टो दुःस्वप्नः। दुःस्था ग्रहाः शकुनानि चाशुभानि। शान्तयः क्रियन्ताम्। सर्वमस्तु सौवर्णमेव होमसाधनम्। एवं सति कर्म गुणवद्भवति। ब्रह्मकल्पा इमे ब्राह्मणाः। कृतमेभिः स्वस्त्ययनं कल्याणतरं भवति। ते चामी कष्टदारिद्र्या बह्वपत्या यज्वानो वीर्यवन्तश्चाद्याप्यप्राप्तप्रतिग्रहाः। दत्तं चैभ्यः स्वर्गमायुष्यमरिष्टनाशनं च भवति' इति बहु बहु दापयित्वा तन्मुखेन स्वयमुपांशु भक्षयन्ति। तदेवमहर्निशमविहितसुखलेशमायासबहुलमविरलकदर्थनं च नयतोऽनयज्ञस्यास्तां चक्रवर्तिता स्वमण्डलमात्रमपि

( १२ ) दुःस्थाः निकृष्टस्थानस्थिताः, अनिष्टकारका इति भावः। होमसाधनं हवनसामग्री। एवं सति—सौवर्णे होमसाधने सतीत्यर्थः। कर्म यज्ञादि। गुणवत् सार्थकम्। स्वस्त्ययनं शान्त्यादिकम्। कष्टं दारिद्र्यम्। बहूनि अपत्यानि येषां ते तथा। अप्राप्तः अद्यापि न लब्धः प्रतिग्रहो दानादिकं यैस्ते। उपांशु गूढमिति भावः। अविरला घना कदर्थना निन्दा यत्र तद् यथा तथा। नयतः जीवनं यापयतः। आस्तां तिष्ठतु। शास्त्रज्ञेति—नीतिशास्त्रज्ञोऽयमिति या समज्ञा कीर्त्तिस्तस्या इति पञ्चम्यास्तसिल्। अभिसन्धातुं जनान् वञ्चयितुम्। अविश्वासो जनानामुत्पद्यते इति शेषः। यावता यत्परिमाणेन। अर्थः प्रयोजनम्। जनन्या

( १२ ) इसके अतिरिक्त राजपुरोहित-गण आकर कहते हैं—'आज मैंने बड़ा खराब स्वप्न देखा है तथा इस समय आपका अमुक ग्रह, अमुक स्थानमें खराब पड़ा है। शकुन भी अच्छे नहीं दीखते हैं अतः यज्ञादि द्वारा इन अरिष्टोंका शमन होना चाहिये।' फिर वे यज्ञ-सामग्रियां बताते हैं तथा कहते हैं कि 'इस यज्ञके सभी पात्र सुवर्णके होने चाहिये क्योंकि इससे यज्ञफल सद्यः सिद्ध होता है। ब्राह्मण परमात्मा के स्वरूप हैं। यदि ये लोग आपका मंगल चाहेंगे तो आपका शीघ्र ही होगा। ये विप्रगण अति दरिद्रताका अनुभव कर रहे हैं और इनके अनेक बालबच्चे हैं। ये लोग नित्य यज्ञानुष्ठान करते हैं। अतः इनका तेज असाधारण है। ये किसीके यहां प्रतिग्रह भी नहीं लेते हैं। जो लोग इनकी पूजा करते हैं उन्हें स्वर्गमें भी सुख प्राप्त होता है तथा आयु भी बढ़ती है और सभी अनिष्ट दूर हो जाते हैं।' इस रीतिसे प्रशंसा करके वे लोग उन ब्राह्मणोंको प्रचुर धन दिला देते हैं और बादमें उनसे छीनकर स्वयं उसे डकार जाते हैं। इस प्रकार रात-दिन सुखसे दूर रहकर घोर परिश्रम करके संसारकी भी भलाई-बुराई ढोनेवाले नीति ज्ञानसे रहित होकर पुरुष भला सार्वभौम; तो क्या होगा अपने राज्यकी रक्षा करना भी उसे दुर्लभ होगा। उनके मन्त्री आदि धूर्त सेवकगण जो शास्त्रानुसार बात बताते हैं वे दिखानेके लिए

दुरारक्ष्य भवेत्। शास्त्रप्रसमप्रतो हि यद्ददाति, यन्मानयति, यत्प्रियं ब्रवीति, तत्सर्वमभिसधातुमित्यविश्वासः। अविश्वास्यता हि जन्मभूमिरलक्ष्म्याः। यावता च नयेन विना न लोकयात्रा स लोकत एव सिद्धः नात्र शास्त्रेणार्थः। स्तनधयोऽपि हि तैस्तैरुपायैः स्तनपानं जनन्या लिप्सते, तदपास्यातियन्त्रणामनुभूयन्तां यथेष्टमिन्द्रियसुखानि।

(१२) येऽप्युपदिशन्ति 'एवमिन्द्रियाणि जेतव्यानि, एवमरिषड्वर्गस्त्याज्य, सामादिरुपायवर्गः स्वेषु परेषु चाजस्रं प्रयोज्यः, संधिविग्रहचिन्तयैव नेयः कालः, स्वल्पोऽपि सुखस्यावकाशो न देयः' इति, तैरप्येभिर्मन्त्रिबकैर्युष्मत्सश्चौर्योर्जितं धनं दासीगृहेष्वेव भुज्यते। के चैते

इत्यत्र पञ्चमी विभक्तिः। लिप्सते लब्धुमिच्छति। अपास्य दूरीकृत्य। अतियन्त्रणाम् अत्यर्थनिपीडनं नीतिशास्त्रस्येति शेषः।

(१२) अरिषड्वर्गः कामक्रोधादयः। इत्यन्तम् उपदिशन्तीत्यस्य कर्म। मन्त्रिबकैः निकृष्टमन्त्रिभिः। दासीगृहेषु परस्त्रीष्वित्यर्थः। एते उपदेशकाः। के उपदेष्टुं नाधिकारिणः। मन्त्रकर्कशाः नीतिकठोराः। तन्त्रकर्तारः नीतिशास्त्रप्रणे-

तो राज्यका कुछ लाभ अवश्य करा देते हैं—राजाका सन्मान करते हैं तथा चिकनी-चुपड़ी बातें बनाते हैं परन्तु, ये सब कार्य उन भोले भाले राजाओंको ठगने का पाखण्डमात्र रहता है अतएव उनपर विश्वास नहीं होता है। जहाँ विश्वास नहीं रहता है वहाँ दारिद्र्यका आगमन अनिवार्य हो जाता है। लोक-व्यवहार में रहते रहते मनुष्यको जीवननिर्वाहके लिये उनकी नीति आप ही आप आ जाती है। जितनीसे उनका काम होता है उतनी नीति जाननेके लिए शास्त्राध्ययनकी आवश्यकता नहीं पड़ती। दूध पीनेवाला बालक किसी न किसी उपायके सहारे अपनी माँका स्तनपान कर ही लेता है, यद्यपि उसे सभी तरह क्लेश उठाने पड़ते हैं तथापि वह समस्तेन्द्रिय जनित सुखों या दुःखोंका अनुभव कर ही लेता है—इसमें तो कोई संशय ही नहीं है।

(१२) जो उपदेशक मन्त्री आदि राजाओंको उपदेश देते हुए कहते हैं कि इस प्रकार से इस रीतिसे इन्द्रियाँ वशमें रहता हैं। काम क्रोध-लोभ मोह आदि छहों शत्रुओं से दूर रहो। अपने परायेके भेद भावोंको त्याग दो। साम-दानादि उपायोंसे कार्य करो। सर्वदा सन्धि विग्रह आदि तथा राज्यभोंकी उन्नतिको सोचते हुए समय बिताओ। क्षणमात्र भी समय नष्ट न करो। कभी भी मौज उड़ानेकी बातें न सोचो' ये ही बगुले भगत उपदेशक मन्त्री आदि राजोंसे चोरी करके प्राप्त किये धनसे वेश्याओंके घर भर देते हैं और

वराकाः। येऽपि मन्त्रकर्कशास्तन्त्रकर्तारः शुक्राङ्गिरसविशालाक्षबाहुदन्तिपुत्रपराशरप्रभृतयस्तैः किमरिषड्वर्गो जितः, कृतं वा तैः शास्त्रानुष्ठानम्। तैरपि हि प्रारब्धेषु कार्येषु दृष्टे सिद्ध्यसिद्धी। पठन्तश्चापठद्भिरतिसंधीयमाना बहवः। नन्विदमुपपन्नं देवस्य, यदुत सर्वलोकस्य वन्द्या जातिः, अयातयामं वयः, दर्शनीयं वपुः, अपरिमाणा विभूतिः। तत्सर्वं सर्वाविश्वासहेतुना सुखोपभोगप्रतिबन्धिना बहुमार्गविकल्पनात्सर्वकार्येष्वमुक्तसंशयेन तन्त्रावापेन मा कृथा वृथा। सन्ति हि ते दन्तिनां दश सहस्राणि, हयानां लक्षत्रयम्, अनन्तं च पादातम्। अपि च पूर्णान्येव हेमरत्नैः कोशगृहाणि। सर्वश्चैष जीवलोकः समग्रमपि युगसहस्रं

---

तारः। शुक्रः शुक्राचार्यः, आङ्गिरसो बृहस्पतिः, विशालाक्षस्तन्नामधेयो नीतिशास्त्रकारः बाहुदन्तिपुत्रोऽपि, पराशरः पराशरनीतिकारः। सिद्ध्यसिद्धी क्वचित् सिद्धिः क्वचिच्चासिद्धिः। पठन्त इति—ये पठनविमुखास्ते पठतो जनान् प्रतारयन्तीत्यर्थः। उपपन्नं सङ्गतं प्राप्तमिति यावत्। देवस्य भवतः। अयातयामं नवम्। दर्शनीयं मनोहरम्। सर्वेत्यादि-तृतीयान्तपदानि तन्त्रावापेनेत्यस्य विशेषणानि। सुखेति—सुखभोगविरोधिना। बहुमार्गेति—नानापथविमर्शनात्। अमुक्तसंशयेन संशययुक्तेन। तन्त्रः स्वराष्ट्रचिन्ता, आवापः परचिन्ता। कोशगृहाणि धनागाराणि। रेचयिष्यति शून्यीकरिष्यति। किमिदमिति-इदम् एतत्सर्वम् अपर्याप्तमसम्पूर्णं किं?

---

आनन्द लूटते हैं। अब जो लोग मन्त्रणा देनेवाले उपदेशक, नीतिकुशल, बड़े-बड़े शास्त्रोंके प्रणेता बनते हैं उनकी कृतियोंको तो आप सुनें—शुक्राचार्य, आंगिरस, विशालाक्ष, बाहुदन्तिपुत्र, पराशर प्रभृति प्रमुख नीतिकार माने जाते हैं। क्या इन लोगोंने काम-क्रोधादिपर कभी विजय प्राप्त की? क्या वे लोग शास्त्रानुसार चलते थे? क्या उन्होंने आरम्भ किये कार्योंकी सिद्धियाँ वा असिद्धियाँ पूर्वसे ज्ञात कर ली थीं? कुछ नहीं, इन पढ़े-लिखे धूर्तोंने अपढ़ लोगोंको अपना अनुयायी बना लिया है। क्या आपको इसमें आनन्द आ सकता है तथा औचित्य जान पड़ता है कि जगत्में माननीय जाति, सुन्दर शरीर, अतुल सम्पत्ति आदि सभी वस्तुयें इन अविश्वसनीय मन्त्रियोंके चक्करमें पड़कर त्याग दी जायँ तथा संसारके समस्त सुखोंको छोड़कर दिन-रात स्वराष्ट्र-पराराष्ट्रका चिन्तन करते हुए जीवन व्यतीत किया जाय? हे महाराज! आप मेरा कहना मानें और ऐसा न करें। आपके यहाँ दश सहस्र हाथी हैं, तीन लाख घोड़े हैं और असंख्य पैदल सेना है। आपका कोष (खजाना) सुवर्ण मणियोंसे परिपूर्ण है। यदि सहस्रों युगों तक आपकी छत्रच्छाया में बैठकर लोग भोजन करें तो भी आपका खजाना कभी खाली न

मुञ्चानो न ते कोष्ठागाराणि रेचयिष्यति । किमिदमपर्याप्तं यदन्यार्जितायासः क्रियते । जीवितं हि नाम जन्मवतां चतुःपञ्चाण्यहानि । तत्रापि भोगयोग्यमल्पाल्पं वयःखण्डम् । अपण्डिताः पुनरश्नन्त एव श्वसन्ते । नार्जितस्य वस्तुनो लवमप्यास्वादयितुमीहन्ते ।

( १४ ) किं बहुना राज्यभारं मारक्षमेष्वन्तरङ्गेषु भक्तिमत्सु समर्प्य अप्सरःप्रतिरूपाभिरन्तःपुरिकाभी रममाणो गीतसंगीतपानगोष्ठीश्च यथर्तु बध्नन्यथार्हं कुरु शरीरलाभम्' इति पञ्चाङ्गीस्पृष्टभूमिरञ्जलिचुम्बितचूडश्चिरमशेत । प्राहसीच्च प्रीतिफुल्ललोचनोऽन्तःपुरप्रमदाजनः ।

( १५ ) जननाथश्च सस्मितम् 'उत्तिष्ठ ननु हितोपदेशाद्गुरवो भव

---

नैवेत्यर्थः । अन्यार्जितपरकीयधनं तदर्थम् आ ' क्लेशो दुरापहितेति शेषः । जन्मवतां प्राणिनाम् । अल्पाल्पमत्यल्पम् । वयःखण्डमायुर्भागः । अपण्डिताः मूर्खाः । अश्नन्त एव श्वसन्ते जिन्वाऽपि नाशमायान्ति ।

( १४ ) मारक्षमेषु राज्यपालनसमर्थेषु । अन्तरङ्गेषु अमात्येषु । यथर्तु ऋतुमनतिक्रम्य कालानुरूपमित्यर्थः । बध्नन् कुर्वन् । यथार्हं सार्थकम् । शरीरलाभं जन्म । पञ्चाङ्गेति—जानुद्वयं बाहुद्वयं मूर्धा चेति पञ्चाङ्गानि तेषां समाहारः पञ्चाङ्गी तया पञ्चभिरङ्गैरित्यर्थः—स्पृष्टा स्पृष्टा भूमिर्येन सः, अञ्जलिना चुम्बिता चूडा मौलिर्येन सः । तथाविधो विहारभद्रः । चिरं दीर्घकालं यावत्, अशेत भूमौ पतितोऽतिष्ठत् ।

(१५) जननाथो राजा अनन्तवर्मा । गुरुत्वविपरीतं दण्डवत्प्रणामकरणमित्यर्थः ।

---

होगा । क्या इतना धन कम है जो धनार्जनका वृथा प्रयास किया जाय । प्रत्येक मनुष्यका जीवन चन्द्रिकाके समान चार दिनोंका है । इसमें भी भोगका समय तो बिल्कुल ही कम है । मूर्ख लोग तो जन्म लेकर भी मरेके समान हो हैं । वे लोग अपनी अर्जित सम्पत्तिका कुछ भी उपयोग करना नहीं चाहते हैं ।

( १४ ) किं बहुना, आप अपने राज्यका भार अपने उन अन्तरंग विश्वसनीय व्यक्तियोंको देकर, जो आपके ऊपर श्रद्धा रखनेवाले हों तथा राजकार्यमें कुशल हों एवं राज्य सँभाल सकें, इन्द्रकी अप्सराओंके समान अन्तःपुरकी रमणियोंके साथ आमोद-प्रमोदपूर्वक गान वाद्यादिका आनन्द रंगशालामें लूटें तथा ऋतुके अनुकूल सुखभोग भोगकर जीवन सफल बनावें ।' ऐसा कहकर वह अपने दोनों हाथ जोड़कर तथा सर्वांगोंको पृथिवीतल पर स्पर्शित कराता हुआ दण्डवत् करने लगा । उसके इन वचनों तथा मुद्राओं को देखकर सभी अन्तःपुरकी वनितायें गद्गद होकर झूम पड़ीं ।

( १५ ) मन्दहास्य करते हुए महाराज भी उठकर कहने लगे—'उठो भाई ! यह तुम

न्तः। किमिति गुरुत्वविपरीतमनुष्ठितम्' इति तमुत्थाप्य क्रीडानिर्भरमतिष्ठत्। अथैषु दिनेषु भूयोभूयः प्रस्तुतेऽर्थे प्रेर्यमाणो मन्त्रिवृद्धेन, वचसाभ्युपेत्य मनसैवाचिन्तज्ञ इत्यवज्ञातवान्।

(१६) अथैवं मन्त्रिणो मनस्यभूत्—'अहो मे मोहाद्बालिश्यम्। अरुचितेऽर्थे चोदयन्नर्थीवाक्षिगतोऽहमस्य हास्यो जातः। स्पष्टमस्य चेष्टानामयथापूर्व्यम्। तथा हि—न मां स्निग्धं पश्यति, न स्मितपूर्वं भाषते, न रहस्यानि विवृणोति, न हस्ते स्पृशति, न व्यसनेष्वनुकम्पते, नोत्सवेष्वनुगृह्णाति, न विलोभनवस्तु प्रेषयति, न मत्सुकृतानि प्रगण-

प्रस्तुते उपदिष्टे। अर्थे विषये। अभ्युपेत्य स्वीकृत्य। अवज्ञातवान् मन्त्रिवृद्धमिति शेषः।

(१६) बालिश्यं मूर्खता। अरुचिते अनभीष्टे। अर्थी याचकः। अक्षिगतो द्वेष्यः। हास्यः परिहासविषयः। अयथापूर्व्यं पूर्वापरवैपरीत्यं, यथापूर्वं न भवतीति अयथापूर्वं तस्य भावः तथा। पूर्वं यथासीदिदानीं न तथेति भावः। रहस्यानि सङ्गोपनीयानि। विवृणोति प्रकाशयति। व्यसनेषु मम विपत्सु। अनुगृह्णाति मयि अनुग्रहं प्रकाशयति। आसन्नकार्येषु उपस्थितकर्मसु। अभ्यन्तरीकरोति नियोजयति। अनर्हेषु अयोग्येषु। अवष्टभ्यमानमाक्रम्यमाणम्। अनुजानाति अनुमोदते। विश्रम्भं विश्वासम्। प्रतिक्षिपति निषेधति। नयज्ञानां नीतिविदाम्। स्खलितानि

क्या कर रहे हो ? तुम मुझे उचित सम्मति देनेवाले व्यक्ति हो, तुम्हारा ऐसा करना-दण्डवत् करना, अनुचित है। तुम तो मेरे उपदेशकके समान हो। उपदेशकोंको कभी शिष्योंके सामने माथा नहीं टेकना चाहिये।' ऐसा कहकर महाराजने उसे उठाया और अपने पास बैठाकर स्वयं भी बैठ गये। उन्होंने अपने मनमें विचार किया 'आजकल हमें हमारे सचिवगण बार-बार प्रस्तुत अर्थके लिए जो सम्मतियाँ दे रहे हैं; इसने उन्हीं सम्मतियोंको सुन लिया है तथा उनका आशय न समझकर बड़-बड़ कर रहा है'। अतः उन्होंने उसकी बातोंपर ध्यान ही नहीं दिया।

(१६) मन्त्रियोंने अपने मनमें विचार किया—अहो हम लोग कितनी भारी अज्ञता कर रहे हैं कि महाराजसे बार-बार अरुचिकर बातें कहते हैं। हमारे बार-बार ऐसे कथनसे वे महाराज हमें भिखारी समझते हैं और हँसी उड़ाते हैं। उनका जो व्यवहार हमारे साथ पहले होता था वह अब नहीं होता। यहाँतक कि वे हमें अब प्रेमपूर्ण दृष्टिसे नहीं देखते हैं, हमसे हँसकर बोलते भी नहीं हैं। अपने चित्तकी बातें भी नहीं बताते हैं। बात करते समय तक भी हमारा स्पर्श नहीं करते हैं। हमें कष्टमें जानकर भी कृपा नहीं करते। हमारे यहाँ महोत्सवों तकमें नहीं सम्मिलित होते। न तो हमारे घर की कुशलता

यति, न मे गृहवार्ता पृच्छति, न मत्पक्षानप्रत्यवेक्षते, न मामासन्नकार्ये ष्वभ्यन्तरीकरोति, न मामन्तःपुरं प्रवेशयति । अपि च मामनर्हेषु कर्मसु नियुङ्क्ते, मदासनमन्यैरवष्टभ्यमानमनुजानाति, मद्वैरिषु विश्रम्भं दर्शयति, मदुक्तस्योत्तरं न ददाति, मत्समानदोषान्विगर्हति, मर्मणि मामुपहसति, स्वमतमपि मया वर्ण्यमानं प्रतिक्षिपति, महार्हाणि वस्तूनि मत्प्रहितानि नाभिनन्दति, नयज्ञाना स्खलितानि मत्समक्षं मूर्खैरुद्घोषयति । सत्य माह चाणक्यः—'चित्तज्ञानानुवर्तिनोऽनर्था अपि प्रियाः स्युः । दक्षिणा अपि तद्भावबहिष्कृता द्वेष्या भवेयुः' इति । तथापि का गतिः । अविनीतोऽपि न परित्याज्यः पितृपैतामहैरस्माद्दशैरयमधिपतिः । अपरित्यजन्तोऽपि कमुपकारमश्रूयमाणवाचः कुर्मः । सर्वथा नयज्ञस्य वसन्तभानो

दोषान् । चित्तज्ञेत्यादि—अनर्था अपि यदि दुर्जनानां स्वमतानुकूला स्युस्तर्हि प्रिया एव । दक्षिणा अनुकूलाः सरला वा यदि सद्भावविरहितास्तदा तेऽपि द्वेष्याः स्युरित्यर्थः । तथापि एवं सत्यपि । का गतिः—उपायान्तरं नास्तीत्यर्थः । पितृपैतामहैः पितृपितामहक्रमागतैः । न श्रूयमाणा वाक् येषां ते—वयमिति शेषः । अपि

ही पूछते न हमारे उपकारोंकी ओर ध्यान ही देते हैं । यहां तक कि हमारे पक्ष पातियोंकी ओर भी विरक्ति दिखाते हैं । हमारे भरोसे अपना कोई विशेष कार्य भी नहीं सौंपते । अन्तःपुरमें भी अब कभी नहीं भेजते हैं । हमें वे सर्वथा अयोग्य समझते हैं । दूसरे लोग हमारे अधिकार प्राप्त करना चाहते हैं तो वे अपनी मौन भाषासे मानो उसकी स्वीकृति दे देते हैं—ऐसा भासता है । वे हमारे शत्रुओंकी बातों पर विश्वास करने लगे हैं । यदि हम कुछ कहते हैं तो उसका उत्तर ही नहीं देते । हमारे निर्दोष मित्रोंकी निन्दायें हमारे समक्ष करते हैं । हमारी रहस्यभरी मार्मिक बातें कह कर हमारी हँसी उड़ाते हैं । यदि कभी हम अपना विचार दर्शाते हैं तो वे उसके विरुद्ध ही बोलते हैं । यदि हम बहुमूल्य वस्तुओंका उपहार भी उनके समीप प्रेषित करते हैं तो वे उसे विनम्रतासे स्वीकार तक नहीं करते हैं । प्रख्यात प्रख्यात नीतिज्ञोंके वाक्योंको वे हमारे समक्ष मूर्खोंका प्रलाप बतलाते हैं । महानीतिज्ञ चाणक्यने उचित ही कहा है कि मनोभिलाषके अनुकूल अनुसरणकर्ता दुराचारी भी राजाओंके प्रियपात्र हो जाते हैं तथा मनोभिलाषके अननुकूल चलनेवाले प्रियजन भी उनके अप्रिय हो जाते हैं । अतः अब क्या किया जाय ? ये महाराज चाहे जैसे भी उद्दण्ड हों परन्तु अपने पिता पितामहादिसे सेवित हैं तथा हमारे स्वामी भी हैं इसलिए उन्हें त्याग भी नहीं सकते हैं । परन्तु, न त्यागने पर भी यदि हम इनकी कोई आज्ञा न मानेंगे तो इनका उपकार भी न होगा । मालूम होता है यह

रश्मकेन्द्रस्य हस्ते राज्यमिदं पतितम् । अपि नामापदो भाविन्यः प्रकृतिस्थमेनमापादयेयुः । अनर्थेषु सुलभव्यलीकेषु कचिदुत्पन्नोऽपि द्वेषः, सद्वृत्तमस्मै न रोचयेत् । भवतु भविता तावदनर्थः । स्तम्भित-पिशुनजिह्वो यथाकथंचिदभ्रष्टपदस्तिष्ठेयम् इति ।

( १७ ) एवं गते मन्त्रिणि, राजनि च कामवृत्ते, चन्द्रपालितो नामाश्मकेन्द्रामात्यस्येन्द्रपालितस्य सूनुः, असद्वृत्तः पितृनिर्वासितो नाम भूत्वा, बहुभिश्चारणगणैर्वह्वीभिरनल्पकौशलाभिः शिल्पकारिणीभिरनेकच्छन्नकिंकरैश्च गूढपुरुषैः परिवृतोऽभ्येत्य विविधाभिः क्रीडाभिर्विहारभद्रमात्मसादकरोत् । अमुना चैव संक्रमेण राजन्यास्पदमलभत । लब्धर-

---

नामेति सम्भावनायाम् । आपादयेयुः कुर्युः । सुलभं व्यलीकमपराधो येषु, तेषु । स्तम्भिता पिशुनानां खलानां जिह्वा येन सः । अभ्रष्टपदः अनष्टाधिकारः ।

( १७ ) कामवृत्ते यथेच्छाचारे । पितृनिर्वासितो नाम भूत्वा—असद्वृत्त इति हेतोः पित्रा निर्वासितो राज्यान्निष्काशित इतिच्छद्मना । नामेत्यलीके । शिल्पकारिणीभिश्चित्रकारिणीभिः । आत्मसात् स्ववशीभूतम् । अमुना विहारभद्रेण सह । संक्रमेण सम्मेलनेन । राजनि नृपेऽनन्तवर्मण्यपि । आस्पदं स्थानं प्रतिष्ठामिति

---

साम्राज्य अब नीतिज्ञ महाराज अश्मकेश्वरके अधीन हो जायगा । क्या भविष्यत्में आनेवाली आपत्तियाँ इन्हें सुधारेंगी ? । जो लोग अनायास विपत्ति मोल लेते हैं उनमें यदि अपराधके चिह्न प्रत्यक्ष दिखाई भी देने लगें तो भी वे उन्हें नहीं देखते । अतएव निःसन्देह अब कोई न कोई आपत्ति अवश्य आवेगी । जो भी हो, हमारा कर्त्तव्य अब यही है कि हम अपनी जीभमें ताला लगाकर अपने पदों पर आरूढ़ रहें ।

( १७ ) इस रीतिसे विचार कर जब मन्त्री तटस्थ रह गये तब राजा स्वेच्छापूर्वक राजकार्य करने लगा । इस बात को देखकर अश्मकेन्द्रके सचिव इन्द्रपालितके दुराचारी पुत्र चन्द्रपालितने, जो पिताके द्वारा गृहसे निष्कासित था, अनेक दुष्टों तथा बन्दीजनोंके द्वारा नाना प्रकार के कौतूहलपूर्ण खेल दिखाकर एवं वेश्याओंकी कौशलपूर्ण कलाओं द्वारा अनेक गुप्तचरोंके सहयोगसे उस राजाको वशीभूत कर लिया । विहारभद्र जब चन्द्रपालितके चंगुलमें पूर्णतया आ गया तब उसने उसी विहारभद्र राजारूपी सेतु ( पुल ) के सहारे समस्त राज्यपद प्राप्त कर लिया । चन्द्रपालितने छिद्रोंके अन्वेषणसे जिन-जिन दुर्व्यसनोंमें उन्हें फँसाया उन-उन दुर्व्यसनोंकी राजाने प्रचुर प्रशंसा की । उसने एकबार

न्धश्च स यद्यद्व्यसनमारभते तत्तथेत्यवर्णयत्—'देव, यथा मृगया ह्युपकारिकी न तथान्यत्। अत्र हि व्यायामोत्कर्षादापत्सूपकर्ता दीर्घाध्वलङ्घनक्षमो जङ्घाजवः, कफापचयादारोग्यैकमूलमाशयाग्निदीप्तिः, मेदोपकर्षादङ्गानां स्थैर्यकार्कश्यातिलाघवादीनि, शीतोष्णवातवर्षक्षुत्पिपासासहत्वम्, सत्त्वानामवस्थान्तरेषु चित्तचेष्टितज्ञानम्, हरिणगवलगवयादिवधेन सस्यलोपप्रतिक्रिया, वृकव्याघ्रादिघातेन स्थलपथशल्यशोधनम्, शैलाटवीप्रदेशानां विविधकर्मक्षमाणामालोचनम्, आटविकवर्गविस्रम्भणम्, उत्साहशक्ति-सन्धुक्षणेन प्रत्यनीकवित्रासनमिति बहुतमा गुणाः।

यावत्। व्यसन मृगयादिकम्—स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यार्थदूषणे। दण्डपारुष्यमित्येतन्महाव्यसनसप्तकमिति वैजयन्ती। तथा तुरूप्। औपकारिकी उपकारायाहां। अत्र मृगयायाम्। जङ्घाजवो जङ्घावेगः। कफस्य श्लेष्मण अपचयात्, क्षयात्। आरोग्यस्यैकमद्वितीय मूल निदानम् आशयाग्नेर्दीप्तिः सन्धुक्षणम्। मेदसां भाषायां चर्बीति ख्यातानां धातुविशेषाणाम् अपकर्षादपचयात्। सत्त्वानां प्राणिनाम्। अवस्थान्तरेषु अवस्थाविशेषेषु। गवलो महिषः। गवयो गोसदृशः पशु। सस्यलोपप्रतिक्रिया सस्यरक्षा। वृकः 'हुंडार' इति भाषा। स्थलपथेति—स्थलपथस्य शल्यानां कण्टकभूतानां शोधनमपनयनम्। शैलाटवीति—पार्वत्यवनभूमिषु बहव प्रदेशा निरर्थकास्तिष्ठन्ति तेषां सार्थकीकरणम्। आटविका आरण्यकाः। विस्रम्भ विश्वासोत्पादनम्। प्रत्यनीक शत्रुः।

महाराजसे कहा—आखेटसे जितने उपकार होते हैं उतने दूसरे से नहीं होते हैं। देखिये, आखेटसे व्यायाम होता है अत शरीर में बल बढता है। शरीरमें बल रहने पर किसी समय आपत्ति आने पर मनुष्य आत्मरक्षा कर सकता है। जांघोंमें पैदल रास्ता समाप्त करनेकी शक्ति आती है। कफ दबा रहता है अत उदराग्नि उद्दीपित रहती है। मेद (चर्बी) के न बढनेसे अङ्ग प्रत्यङ्ग फुर्तीले रहते हैं। शीत वायु-उष्ण भूख प्यास आदि सहन करनेकी शक्ति रहती है-पशु हर एक प्राणीके मनोभाव ज्ञात करनेका ज्ञान प्राप्त होता है। हिरण तोमर आदि पशुओंको मार देनेसे खेतोंके अन्नोंकी चर जानेसे रक्षा होती हैं। सिंह भेड़ियों आदि चौपायोंके मारनेसे स्थलमार्ग निष्कण्टक हो जाता है। स्थलमार्ग साफ रहनेसे मनुष्य निर्भय होकर पर्वत अरण्योंमें घूमकर नदियोंकी सैर कर सकते हैं जिनमे ज्ञानवृद्धिके साथ भौगोलिक एवं भौतिक वस्तुओंका भी बोध होता है तथा यह भी विदित हो जाता है कि अमुक स्थान अमुक जगह है। बार बार आवागमनसे वनैले पशुओंको उस शिकारीके प्रति मनमें प्रतीति हो जाती है अत फिर वे कष्ट भी नहीं देते।

( १८ ) द्यूतेऽपि द्रव्यराशेस्तृणवत्त्यागादनुपमानमाशयौदार्यम्, जयपराजयानवस्थानाद्धर्षविषादयोरविधेयत्वम्, पौरुषैकनिमित्तस्यामर्षस्य वृद्धिः, अक्षहस्तभूम्यादिगोचराणामत्यन्तदुरुपलक्ष्याणां कूटकर्मणामुपलक्षणादनन्तबुद्धिनैपुण्यम्, एकविषयोपसंहाराच्चित्तस्यातिचित्रमैकाग्र्यम्, अध्यवसायसहचरेषु साहसेष्वरतिः, अतिकर्कशपुरुषप्रतिसंसर्गादनन्यधर्षणीयता मानावधारणमकृपणं च शरीरवापनमिति ।

( १९ ) उत्तमाङ्गनोपभोगेऽप्यर्थधर्मयोः सफलीकरणम्, पुष्कलः पुरुषाभिमानः, भावज्ञानकौशलम्, अलोभक्लिष्टमाचेष्टितम्, अखिलासु

---

( १८ ) अनुपमानमतुलनीयम् । आशयस्य चित्तस्य औदार्यम् । जयपराजययोः अनवस्थानात् अनिश्चितत्वात् । अविधेयत्वम् अवशीभूतत्वम् । एकस्मिन् विषये उपसंहारात् अभिनिवेशात् । एकाग्रस्य भाव ऐकाग्र्यम् । साहसेषु साहसकर्मसु अरतिः अप्रीतिः । अनन्यधर्षणीयता अन्यानभिभवनीयता । अकृपणं दैन्यरहितम्, शरीरवापनं शरीरधारणम् ।

( १९ ) पुष्कलः अतिशोभनः । अलब्धोपलब्धीत्यादि—अलब्धस्य वस्तुनो लब्धिर्लाभः, लब्धस्य अनुरक्षणं पालनं, रक्षितस्योपभोगः, भुक्तस्यानुसन्धानं स्मरणं, रुष्टस्य क्रुद्धस्य च अनुनयः समाधानमित्यादिषु विषयेषु अजस्रं निरन्तरम्

---

आखेटसे उत्साहशक्ति भी बढ़ती जाती है जिससे रिपुगणोंमें भय उत्पन्न करनेके अनेक तरीके ज्ञात हो जाते हैं ।

( १८ ) इसी रीतिसे द्यूत-क्रीडासे भी संसारकी सभी वस्तुओंको तृणके सदृश त्यागने की शक्ति प्राप्त होती है । जय-पराजयका भी कोई निश्चय नहीं रहता कि कौन कब विजित होगा अथवा किसकी कब जय होगी ? जुआ खेलने वाला हर्ष-विमर्षके विषादोंसे दूर रहता है । इससे पौरुष बढ़ानेवाले अमर्षकी उत्पत्ति होती है । जुआ खेलनेसे हस्त-कौशल आदि पाण्डित्य का अनुभव होता है । ये बातें ऐसे जानना अति कठिन है । बुद्धिमें नैपुण्य आता है । एक ही कार्यमें मन लगानेसे मनमें आश्चर्यसे एकाग्रता-स्रोत उत्पन्न होता है । उद्योगके सहायक कामोंमें बुद्धिकी लगन बढ़ती है । जुआ खेलनेमें एकसे एक कठोर पुरुषोंका संपर्क हो जाता है जिससे मन इतना दृढ़ हो जाता है कि किसीके विचलित करने पर भी विचलित नहीं होता है । जुआ खेलने से स्वाभिमानका भाव उदय होता है एवं दीनतारहित जीवन व्यतीत करनेकी क्षमता आती है । अतः जुआ खेलना श्रेयस्कर है ।

( १९ ) इसी प्रकारसे अच्छी-अच्छी अंगनाओंके साथ रमण करनेसे भी धर्म और अर्थकी प्राप्ति होती है, जीवन सफल होता है । ऐसा करनेसे प्रबल पौरुषाभिमान बढ़ता है ।

कलासु वैचक्षण्यम्, अलब्धोपलब्धिलब्धानुरक्षणरक्षितोपभोगसुखानुसन्धानरुष्टानुनयादिष्वजस्रमभ्युपायरचनया बुद्धिवाचोः पाटवम्, उत्कृष्टशरीरसंस्कारात्सुभगवेषतया लोकसम्भावनीयतया परं सुहृत्प्रियत्वम्, गरीयसी परिजनव्यपेक्षा, स्मितपूर्वाभिभाषित्वम्, उद्रिक्तसत्त्वता, दाक्षिण्यानुवर्तनम् । अपत्योत्पादनेनोभयलोकश्रेयस्करत्वमिति ।

( २० ) पानेऽपि नानाविधरोगभङ्गपटीयसामासवानामासेवनात्स्पृहणीयवयोव्यवस्थापनम्, अहङ्कारप्रकर्षादशेषदुःखतिरस्करणम्, अङ्गजरागदीपनादङ्गनोपभोगशक्तिमधुक्षणम्, अपराधप्रमार्जनान्मनःशल्यो-

अभ्युपायरचनया बुद्धिवाचो मतिवचनयो पाटवं कौशलम् । शरीरस्य संस्कार शुद्धि सम्भावनीयता सम्माननीयता । परिजनव्यपेक्षा परिजनेषु दाक्षिण्यम् । उद्रिक्तसत्त्वता समधिकसारत्वम् ।

( २० ) पाने मद्यपाने । नानाविधानां रोगाणां विषयाभिलाषाणां भङ्गे तरङ्गे विच्छित्तौ वा पटीयसाम् । आसवानां मद्यानाम् । आसेवनात् पानात् । स्पृहणीयवयो यौवनं तस्य व्यवस्थापनं संरक्षणम् । अङ्गजस्य कामस्य राग इच्छा तस्य दीपनाद् वृद्धे । सन्धुक्षणमुत्तेजनम् । अपराधस्य अन्यकृतापराधस्य मार्जनाद्

दूसरोंके मानसिक भावोंका ज्ञान होता है। निर्लोभ काममें प्रवृत्तिके भाव जागते हैं। सभी कलाओंमें नैपुण्य प्राप्त होता है। लब्ध वस्तुकी रक्षाका, अलब्ध वस्तुके लाभका, रक्षित वस्तुके उपभोग का एवं भोगी हुई वस्तुओंसे उत्पन्न सुख-दुःखोंके विवेचनका ज्ञान प्राप्त होता है। रूठे हुए प्राणियोंके मनानेमें नित्य जो अनुनय विनय करना पड़ता है उससे बुद्धि और वचनमें प्रखरता आती है। ऐसी स्थितिमें शारीरिक संस्कारों का ओर पूर्ण ध्यान रखना चाहिये तथा वेश भूषा की ओर भी पर्याप्त ध्यान रखना चाहिये। इससे सर्व साधारणके समक्ष सम्मान प्राप्तिका अवसर मिलता है। मित्रोंमें अनुराग बढ़ता है तथा प्रीतिकी भी प्राप्ति होती है। हँस हँस कर बातें करने का अभ्यास होता है। परिजनों पर सङ्कोच न करनेका ज्ञान होता है। औदार्यका उदय एवं बलकी अभिवृद्धि होती है। सन्तानोत्पत्तिका लाभ होता है जिससे दोनों लोकोंमें कीर्ति बढ़ती है। यह मार्ग भी श्रेयस्कर है।

( २१ ) इसी प्रकारसे मद्यपानसे भी अनेक लाभ होते हैं। मद्यपानसे विविध प्रकारके रोग दूर हो जाते हैं। क्योंकि सेवनसे मनुष्य मनचाही अवस्था प्राप्त कर लेता है। मद्यसे अहङ्कार बढ़ जाता है जिससे सभी तरहके क्लेश नष्ट हो जाते हैं। मदिरापानसे वासनाएं उद्दीपित होती हैं जिससे स्त्रियोंके साथ सम्भोग करनेकी शक्ति प्रबल होती है।

न्मार्जनम्, अश्राव्यशंसिभिरनर्गलप्रलापैर्विश्वासोपबृंहणम्, मत्सराननुबन्धादानन्दैकतानता, शब्दादीनामिन्द्रियार्थानां सातत्येनानुभवः, संविभागशीलतया सुहृद्वर्गसंवर्गणम्, अनुपमानमङ्गलावण्यम्, अनुत्तराणि विलसितानि, भयार्तिहरणाच्च साङ्ग्रामिकत्वमिति ।

( २१ ) वाक्पारुष्यं दण्डो दारुणो दूषणानि चार्थानामेव यथावकाशमौपकारिकाणि । नहि मुनिरिव नरपतिरुपशमरतिरभिभवितुमरिकुलमलम्, अवलम्बितं च लोकतन्त्रम्' इति ।

---

विस्मरणात् । अश्राव्यं श्रावयितुमयोग्यं यत्तस्यापि शंसिभिः सूचकैः । अनर्गलप्रलापैर्यथेच्छमनर्थकवचनैः । विश्वासस्योपबृंहणं वर्द्धनम् । मत्तः सन्नश्राव्यमपि श्रावयति तेन च जनानां विश्वासः समुत्पद्यते । यदयं सारल्येनास्माभिरश्राव्यमपि वक्तीति भावः । मत्सरस्य मात्सर्यस्य अननुबन्धादधारणात् । आसवपानेन मात्सर्यं न तिष्ठतीति प्रसिद्धिः । एकतानता तत्परता । इन्द्रियार्थानां चक्षुरादीन्द्रियविषयाणाम् । सातत्येन नैरन्तर्येण । आगतेभ्यः सर्वेभ्योऽपि मद्यस्य सम्यग् वण्टनं संविभागः तच्छीलतया सुहृद्वर्गस्य संवर्गणमेकत्रीकरणम् । अनुत्तराणि अलौकिकानि । संग्रामे साधुः सांग्रामिकः तस्य भावः । युद्धपटुत्वमित्यर्थः ।

( २१ ) एतावता व्यसनसप्तके मृगयादीनां चतुर्णामुपकारकत्वं प्रतिपादितमधुना अवशिष्टं वाक्पारुष्यादित्रयमपि राज्ञामुपकारकमिति वक्ति वाक्पारुष्येति— वाक्पारुष्यमेकं, दारुणो दण्डो दण्डपारुष्यं द्वितीयम्, अर्थानां दूषणानि चेति तृतीयं, तान्यपि यथावकाशं यथावसरमुपकारकाणीति । नहीति—उपशमे शान्तौ रतिरनुरागो यस्यासौ—तादृशो मुनिर्यथा अरिकुलं कामादिशत्रुवर्गं जेतुं समर्थस्तथा शान्तो नरपतिररिकुलं पराजेतुं लोकतन्त्रं राष्ट्रसाधनमवलम्बितुं धारयितुञ्च नालमित्यर्थः ।

---

अनेकों अपराधोंको क्षमा करनेके कारण चित्तके उद्वेग दूर हो जाते हैं । रहस्य एवं गुप्त बातों की सूचनासे और व्यर्थकी बकवादसे भी विश्वास उत्पन्न करा देनेकी क्षमता आ जाती है । राग-द्वेष दूर हो जानेके कारण परमानन्द ही परमानन्द दिखायी पड़ता है । शब्द स्पर्श रूप रस आदिके अनुभव होते रहते हैं । परस्पर बाँट कर खाने-पीनेसे अपने परिजनों और सगे-सम्बन्धियोंमें एकता बनी रहती है । शरीरकी सुन्दरता भी असाधारणतया बढ़ जाती है । भोग-विलासों का सर्वोत्कृष्ट सुख प्राप्त होता रहता है । युद्ध-कौशल भी प्राप्त होता है तथा भयके कारण उत्पन्न होनेवाला सङ्कट टालते रहनेसे समर-नैपुण्य भी प्राप्त होता है ।

( २१ ) इसी प्रकारसे कटु वचन, कठोर दण्ड और अर्थापहरण ( दूसरेके धनके

( २२ ) असावपि गुरूपदेशमिवात्यादरेण तस्य मतमन्ववर्तत। तच्छीलानुसारिण्यश्च प्रकृतयो विशृङ्खलमसेवन्त व्यसनानि। सर्वश्च समानदोषतया न कस्यचिच्छिद्रान्वेषणायायतिष्ट। समानभर्तृप्रकृतय स्तन्त्राध्यक्षा स्वानि कर्मफलान्यभक्षयन्। तत क्रमादायद्वाराणि व्यशीर्यन्त। व्ययमुखानि विटवैधेयतया विभोरहरहर्व्यवर्धन्त। सामन्तपौर जानपदमुख्याश्च समानशीलतयोपारूढविश्रम्भेण राज्ञा सजाया. पानगोष्ठीष्वभ्यन्तरीकृता स्व स्वमाचारमत्यचारिषु।

( २३ ) तदङ्गनासु चानेकापदेशपूर्वमपाचरन्नरेन्द्र.। तदन्तःपुरे

( २२ ) असौ अनन्तवर्मापि। तस्य चन्द्रपालितस्य। अन्ववर्त्तत अन्वसरत्। तच्छीलानुसारिण्य नृपस्वभावानुवर्तिन्य। छिद्रान्वेषणाय दोषानुसन्धानाय। समाना भर्तु प्रकृतिर्येषां ते तन्त्राध्यक्षा सेनापतय। कर्मफलानि पूर्वसुकृतफला न्यभक्षयन् खादितवन्त—तेऽपि दुर्वृत्ता अभवन्नित्यर्थ। आयद्वाराणि अर्थागमो पाया.। व्यशीर्यन्त क्षीणा अभवन्। विटेति—विटत्वेन परदारासक्तत्वेन वैधेयतया मूर्खतया च विभो स्वामिन। विटविधेयतयेति पाठे विटानां धूर्तानां विधेयतया वशीभूततया। उपारूढविश्रम्भेण उत्पन्नविश्वासेन। सजाया सस्त्रीका। पानगोष्ठीषु मद्यपानसभासु। अभ्यन्तरीकृता प्रवेशिता। अत्यचारिषु व्यचरामासु।

( २३ ) तदङ्गनेति—तेषां सामन्तादीनामङ्गनासु स्त्रीषु। अनेकापदेशपूर्वं

आदरण ) से भी लाभ होता है। क्योंकि मनसे शान्तिप्रिय राजा न कभी अपने शत्रुओं को ही जीत सकता है और न प्रजाकी स्थिति ही अपने काबूमें रख सकता है।

( २२ ) उस धूर्तकी सम्मति महाराज ने स्वीकार कर ली और उसीके अनुसार काम करने लगे। 'यथा राजा तथा प्रजा'के अनुसार राजाके अनुसरणमें प्रजा भी सुरा पान आदि करने लगी। इस प्रकारसे राजासे लेकर नौकर तक सभी लोग उस राज्यवर्गके दुराचारी, स्वेच्छाचारी तथा मदान्ध हो गये अत ऐसी दशामें कोई किसीका दोष कैसे कहे। जब राजा तथा राजसेवक समान-व्यसनी हो गये तब राज्यके अधिकारी प्रजासे धन लेकर स्वयं लूटने खाने लगे। धीरे धीरे आयके सारे दरवाजे बन्द हो गये। इधर धूर्तोंके वशीभूत, मदिरापान तथा वेश्यागमनमें अनुरक्त रहनेसे राजाका व्यय बढता गया। उस धूर्तने राज्यके सामन्तों, धनिकों तथा रईसोंकी भी स्त्रियोंको विश्वास दिलाकर अपनी ओर मिला लिया और अपने अखाड़े, पानगोष्ठी एवं रंगशालामें सम्मिलित कर लिया। यहाँ तक कि उन स्त्रियोंसे भी विविध प्रकारके दुराचार करने कराने लगा।

( २३ ) अब अगणित प्रकारके छलोंसे उस धूर्तने अपने सामन्तों की स्त्रियोंको भी न

चामी भिन्नवृत्तेषु मन्दत्रासो बहुसुखैरवर्तन्त । सर्वश्च कुलाङ्गनाजनः सुलभभङ्गिभाषणरतो भग्नचारित्रयन्त्रणस्तृणायापि न गणयित्वा भर्तॄन्धातृगणमन्त्रणान्यशृणोत् । तन्मूलाश्च कलहाः सामर्षाणामुदभवन् । अहन्यन्त दुर्बला बलिभिः । अपहृतानि धनवतां धनानि तस्करादिभिः । अपहृतपरिभूतयः प्रहताश्च पातकपथाः । हतबान्धवा हृतवित्ता वधबन्धातुराश्च मुक्तकण्ठमाक्रोशन्नश्रुकण्ठ्यः प्रजाः ।

(२४) दण्डश्चायथाप्रणीतो भयक्रोधावजनयत् । कृशकुटुम्बेषु लोभः पदमधत्त । विमानिताश्च तेजस्विनोऽमानेनादह्यन्त । तेषु तेषु चाकृत्येषु

---

बहुकपटपूर्वकम् । अपाचरत् असदाचरत् । तदन्तःपुरेति—तस्य नृपस्यान्तःपुरेषु स्त्रीषु । अमी सामन्तादयः । भिन्नं विनष्टं वृत्तं चरित्रं येषां तेषु भिन्नवृत्तेष्विति तदन्तःपुरेष्वित्यस्य विशेषणम् । मन्दत्रासा निर्भयाः-अमी इत्यस्य विशेषणम् । भग्नं भिन्नं चारित्रयन्त्रणं वृत्तबन्धनं यस्येति कुलाङ्गनाजन इत्यस्य विशेषणम् । धातॄणां जाराणां गणः समूहस्तस्य मन्त्रणानि वचनानि । धाता जारे विधातरि इति कोषः । सामर्षाणां असहिष्णूनाम् । अपहृता दूरीकृता परिभूतिस्तिरस्क्रिया येभ्यस्ते । प्रहता वितताः विस्तारं गता वा पातकपथाः पापमार्गाः । पापमार्गप्रवृत्तानपि न कश्चित्तिरस्करोतीत्यर्थः । आक्रोशन् चक्रन्दुः । अश्रुकण्ठ्यः वाष्पगद्गदस्वराः ।

(२४) अयथाप्रणीतोऽन्यायकृतः । लघुपापेन गुरुदण्डो गुरुपापेन च लघुदण्ड इत्यर्थः । कृशकुटुम्बेषु दरिद्रपरिवारेषु । पदं स्थानम् । अकृत्येषु अन्यायेषु ।

---

छोड़ा तब सामन्तगण भी कुमार्गी होकर निर्भीकभावसे अन्तःपुरकी सुन्दरियोंके साथ भोग-विलास करने लगे । कुछ ही दिनोंमें अन्तःपुरकी सब महिलाएं चरित्रहीन होकर राजाको तृणवत् भी न गिनकर उन धूर्तोंके कथनानुसार आचरण करने लगीं । इसके पश्चात् उन छैलोंमें कलह की आग भड़की जिससे सबल निर्बल को मारने-पीटने लगे । चोर-डाकू धनिकोंका धन लूटने लगे । राज्य की सारी सम्पत्ति तहस-नहस हो गयी । पापके सभी दरवाजे खुल गये । उसकी सारी प्रजाके बन्धु-बान्धव मार डाले गये । उनका बहुत सा द्रव्य हर लिया गया । उच्छृङ्खल अधिकारियों द्वारा कितने ही सीधे-सादे भी मार डाले गये तथा कारागार में ठूंस दिये गये । खुलकर अराजकता फैल गयी । ऐसी दशामें बची-खुची प्रजा साँसी आँसू बहाकर कन्दन करने लगी ।

(२४) जब अपराधियों को उचित रूप से दण्ड न मिला तो प्रजामें भय, क्रोधका सञ्चार बढ़ गया । धनहीन परिवारोंमें लोभ फैल गया । राज्यके स्वाभिमानी पुरुषोंके

प्रासरन्परोपजापाः । तदा च मृगयुवेषमृगबाहुल्यवर्णनेनाद्रिद्रोणीरनपसा
रमार्गाः शुष्कतृणवंशगुल्माः प्रवेश्य द्वारतोऽग्निविसर्गैः, व्याघ्रादिवधो
त्साहय तन्मुखपातनैः, इष्टकूपतृष्णोत्पादनेनातिदूरहारितानां प्राणहा
रिभिः क्षुत्पिपासाभिवर्धनैः तृणगुल्मगूढच्छन्नतटप्रदरपातहेतुभिर्विषम
मार्गप्रधावनैः विषमुखीभिः क्षुरिकाभिश्चरणकण्टकोद्धरणैः विष्वग्विसर
विच्छिन्नानुयातृतयैकाकीकृतानां यथेष्टघातनैः, मृगदेहापराद्धेनोमेषुमो
क्षणैः, सपणबन्धमधिरुह्याद्रिशृङ्गाणि दुरधिरोहाण्यनन्यलक्ष्यैः प्रपातनैः,
आटविकच्छद्मना विपिनेषु विरलसैनिकानां प्रतिरोधनैः, अक्षद्यूतपक्षि

परोपजापाः भेदाः । तदा भेदे समुत्पन्ने । मृगयुवेषेति—मृगयुवेषेण व्याधरूपधा
रिणा यन्मृगबाहुल्यवर्णनं तेन । विश्वासोत्पादनाय स्वयं मृगयुर्भूत्वा अत्र बहवो
मृगा वर्तन्त इति कथयित्वेत्यर्थः । अद्रिद्रोणी पर्वतमध्यपद्धती । द्रोणि स्यान्म
ध्यपद्धतिरिति कोषात् । नास्ति अपसारमार्गो निर्गमनमार्गो यासु ताः । शुष्काणि
तृणानि वंशगुल्मानि च यासु ताः । अद्रिद्रोणीरित्यस्य विशेषणद्वयम् । प्रवेश्य
जनानिति शेषः । अग्निविसर्गैरनलप्रदानैः अनन्तवर्मकटकं जर्जरमकुर्वन् इत्यग्रे
नान्वयः । एवं सर्वत्रापि । तन्मुखपातनैः व्याघ्रमुखपातनैः । इष्टेषु मनोज्ञेषु कूपेषु
तृष्णोत्पादनेन तत्र मनोज्ञः कूपोऽस्ति तस्यैव जलं पातव्यमिति तृष्णामुत्पाद्य ।
अतिदूरहारितानां दूरं नीतानाम् । तृणगुल्मेति—तृणगुल्मैर्गूढच्छन्नानामाच्छादितानां
तटानामुच्चप्रदेशानां प्रदरेषु भिन्नमार्गेषु पातहेतुभिः पतनकारणैः । विषमु
खीभिः विषलिप्ताग्राभिः । विष्वगिति—विष्वक् समन्ताद् विसरेण प्रसरणेन विच्छिन्ना
भ्रष्टा अनुयातारोऽनुसारिणो येषां तेषां भावस्तया । हेतौ तृतीया । यथेष्टघातनैः
यथेच्छमारणैः, मृगदेहे मृगशरीरे अपराद्धैर्लक्ष्यभ्रष्टैः । इषुमोक्षणैर्बाणक्षेपैः ।
सपणबन्धं पणं कृत्वा । प्रपातनैः पातनैः । आटविकः आरण्यकस्तस्य कपटेन ।

निरादरसे जनता शोकातुर क्षुभित हो गयी । तरह-तरहके अनाचारोंसे शनै शनै शत्रुओं
द्वारा प्रसारित भेदनीति फलित हो गयी । इस कारण कितने शत्रुगणोंके दूत बहेलियों व
अन्य लोगोंके स्वरूप धारण कर अनन्तवर्माकी सेनामें प्रविष्ट हो गये और उन्हें वनके
किसी प्रदेशमें अन्य जन्तुओंकी अधिकता तथा सहज ही में उनकी प्राप्ति का प्रलोभन
देकर पर्वतों की ऐसी कण्टकाकीर्ण बीहड़ गुफाओंमें ले गये जहां से निकल भागने का कोई
साधा मार्ग ही न था । वहां उन्हें पहुँचाकर उन लोगोंने गुफाओं के दरवाजों पर घास
फूस-लकड़ियों की राशि एकत्र करके आग लगा दी जिससे वे सब वहीं जलकर मर गये ।
कुछ शत्रुके दूत छलसे अन्य सेना को दूसरे जंगलमें यह कह कर ले गये कि 'अमुक

युद्धयात्रोत्सवादिसंकुलेषु बलवदनुप्रवेशनैः इतरेषां हिंसोत्पादनैः, गूढोत्पादितव्यलीकेभ्योऽप्रियाणि प्रकाशं लब्ध्वा साक्षिषु तद्विख्याप्याकीर्तिगुप्तिहेतुभिः पराक्रमैः, परकलत्रेषु सुहृत्त्वेनाभियोज्य जारान्भर्तृभयमप-

विरलसैनिकानां स्वल्पसैन्यानाम्। गूढेत्यादि—गूढं गुप्तमुत्पादितं व्यलीकं दुःखं येषां तेभ्यः तत्सकाशमित्यर्थः। प्रकाशं सर्वसमक्षं अप्रियाणि अप्रियवाक्यानि लब्ध्वा श्रुत्वा अकीर्तेरयशसो गुप्तेर्गोपनस्य हेतुभिः कारणैः पराक्रमैः साक्षिषु द्रष्टृषु तद् विख्याप्य ख्यापयित्वा। अभियोज्य नियोज्य। तत्साहसेति—तेषां जाराणां

अरण्यमें एक सिंह है जो बड़ा उपद्रव मचा रहा है, उसे मारना धर्म है' और वहाँ ले जाकर उन्होंने उसी सिंहसे तथा स्वयं भी उस सेनाके लोगोंको मरवा डाला। कितने ही प्यासे सिपाहियोंको किसी कूपका पता बताकर भेज दिया और मार्गमें बड़ी बड़ी सुरंगें पहले ही जाकर खोद दीं तथा उनपर घास बिछा दी, जिस कारण वे प्यासे सिपाही उधरमे जाते हुए उन्हीं सुरंगोंमें गिरकर मर गये। ऐसे-ऐसे कौशल उन लोगोंने रचे कि कितने सिपाही पर्वतोंके दुर्गम प्रदेशमें इधर-उधर भटक कर मर गये। वनोंके प्रदेशमें जब सैनिकोंको काँटे गड़ जाते तो उन्हें निकालनेके लिए वे लोग विषभरी सूइयाँ देते, जिनसे रक्त का संस्पर्श होते ही कितने यमलोक चले गये। अथवा उनके घाव सड गये जिनसे वे सड़ सड़कर मरे। कभी-कभी कुछ सैनिकोंकी टोलियोंको बहकाकर जंगलमें ले जाकर स्वयं ही मार डालते, वन-जन्तुओंके शिकारके बहाने तो अगणितोंको मार डाला। कभी-कभी पहाड़की चोटीपर दौड़की बाजी लगाकर ले जाते और एकान्त पाकर वहाँसे उन्हें ढकेलकर मार डालते थे। कितने सैनिकोंको वनवासीका वेष धारण कर छिपकर शत्रुदूतोंने मार डाला। कभी-कभी सैनिकोंके आमोद-प्रमोदके समय शत्रुदूत एकाएक छापा मारकर उन्हें मार डालते थे। कभी-कभी कोल भीलोंके रूपोंमें सहायताके बहाने कुटियामें ले जाकर शत्रुदूत सैनिकोंको मार देते। कभी-कभी वे लोग कोई ऐसा झमेला खड़ा कर देते थे कि सैनिक गण परस्पर ही लड़कर कट मरते थे। कभी-कभी वे लोग झूठी-मूठी अफवाहें उड़ाकर लोगोंमें आतंक फैला देते थे, जिस कारण, साधारण जनतामें महाराज अनन्तवर्माकी बदनामी फैल जाती थी। फिर समय पाकर सेनाके वीरों को वे लोग मारके यमलोक भेज देते थे। कभी-कभी वे लोग किसी स्त्रीसे किसी अधिकारी का अनुचित सम्बन्ध झूठ-मूठ जोड़कर लड़ा देते और तत्पक्षके वीरोंको मार डालते। कभी-कभी किसी सुन्दरीका प्रलोभन देकर उसके द्वारा सैनिकों तथा मन-चले लोगों को पूर्व संकेतित स्थान पर बुला लेते और वहाँ पर पहलेसे ही छिपे शत्रुपक्षी लोग उन्हें मार डालते। कभी-कभी वे लोग अमुक कन्दरा या गुफामें धन गड़ा है ऐसा

इत्य वत्साहसोपन्यासै योग्यनारीहारिताना सकेतेपु प्रागुपनिलीय पश्चादभिद्रुत्याकीर्तनीयैः प्रमापणै, वधप्रलोभ्य बिलप्रवेशेपु निधानखननेपु च विघ्नव्याजसाध्यैर्व्योपादने, मत्तगजाधिरोहणाय प्रेर्य प्रत्यवायनिर्वर्तनै, व्यालहस्तिन कोपयित्वा लक्ष्यीकृतमुख्यमण्डलेष्वपक्रमणै, दायाद्यर्थं विवदमानानुपांशु हत्वा प्रतिपक्षेष्वयश पातनै, सामन्तपुरजनपदेष्वयथावृत्तानप्रकाशमभिप्रहृत्य तद्वैरिनामघोपणै, योग्याङ्गनाभिरहनिशमभिरमय्य राजयक्ष्मोत्पादनै, वस्त्राभरणमाल्याङ्गरागादिपु रसवि·

साहसोपन्यासै साहसोत्पादनै । योग्यनारीति—योग्याभिर्नारीभिर्हारितानामाकर्षितानां सङ्केतेषु सङ्केतस्थानेषु प्राक् प्रथममुपनिलीय प्रच्छन्नो भूत्वा पश्चादभिद्रुत्य धावित्वा अकीर्तनीयैर्निन्दनीयैः प्रमापणैर्मारणै । प्रत्यवायनिर्वर्तनै हिंसोत्पादनै । व्यालहस्तिन दुष्टगजम् । अपक्रमणै प्रेरणै । दायाद्यर्थं धनादिविषये । अयथावृत्तान् असद्वृत्तान् । राजयक्ष्मा रोगविशेष । रसविधानकौशलै विषप्रदानचातुर्यै । चिकित्सामुखेन चिकित्साच्छलेन । आमयोपबृंहणै रोगवर्द्धनै ।

प्रलोभन देकर सनिकों सहित अधिकारियोंको ले जाकर धोखा दे कर वहीं समाप्त कर देते। कभी कभी व लोग अमुक वनमें अमुक सिद्ध रहता है, उससे सारी मनोकामनाओं की सिद्धियाँ प्राप्त होती हैं। ऐसा कहकर राज्यके वीरों तथा अधिकारियों को ले जाते और वहाँ पर मन्त्र-तन्त्रका ढोंग दिखाकर धीरे धीरे उन लोगों की इहलीला समाप्त कर देते। कभी-कभी किसी-किसी को किसी मतवाले हाथी पर चढ़ा देते और ऊपर ऊपर उस मतवाले हाथी को सम्हालने का प्रदर्शन दिखाते तथा भीतर से उसे भड़का देते जिससे वह बिगड़कर उस वीर को ही मार डालता। कभी-कभी वे लोग किसी हाथी को मतवाला करके क्रोधित बना देते और भीड़ में उस ओर भगाते जिधर राज्याधिकारी खड़े रहते। बस, वह मतवाला आगबबूला उन्मत्त हाथी उन सभी को रौंदकर मार देता। राजा के वंश वालों में पुराने झगड़े का आपसी मनमुटाव जानकर वे लोग उनमें से एक पक्ष के लोगों को मार डालते और उनके मारने के आरोप दूसरे पक्ष वालों पर प्रसिद्ध करके और भी लड़ाई बढ़ा देते। कभी कभी वे लोग धनिकों की बस्तियों में जाकर दुराचारी गुण्डों को मार डालते और इस बात को प्रसिद्धि कर देते कि उनको मारने वाले शत्रुगण वे ही धनिकगण हैं जिससे दुराचारी वर्ग कुपित हो धनिकों कुलीनों पर चढ़ाई कर बैठता था। कभी-कभी किसी रोगिणी महिला के साथ वीरों का धोखे से सम्बन्ध कराकर उन्हें आजीवन रोगी क्षय आदि रोगों का सर्टिफिकेट दिला देते। कभी-कभी वीरों को वे लोग तेल, फल, फूल, इत्र, वस्त्र, आभूषण विषाक्त पदार्थों से युक्त दे देते जिनका

धानकौशलैः, चिकित्सामुखेनामयोपबृंहणैरन्यैश्चाभ्युपायैरश्मकेन्द्रप्रयुक्तास्तीक्ष्णरसदादयः प्रक्षपितप्रवीरमनन्तवर्मकटकं जर्जरमकुर्वन् ।

( २५ ) अथ वसन्तभानुर्भानुवर्माणं नाम वानवास्यं प्रोत्साह्यानन्तवर्मणा व्यग्राहयत् । तत्परामृष्टराष्ट्रपर्यन्तश्चानन्तवर्मा तमभियोक्तुं बलसमुत्थानमकरोत् । सर्वसामन्तेभ्यश्चाश्मकेन्द्रः प्रागुपेत्यास्य प्रियतरोऽभूत् । अपरेऽपि सामन्ताः समगंसत । गत्वा चाभ्यर्णे नर्मदारोधसि न्यविशन् । तस्मिंश्चावसरे महासामन्तस्य कुन्तलपतेरवन्तिदेवस्यात्मनाटकीयां क्षमावलोर्वशीं नाम चन्द्रपालितादिभिरतिप्रशस्तनृत्यकौशलामाहूयानन्तवर्मा नृत्यमद्राक्षीत् । अतिरक्तश्च भुक्तवानिमां मधुमत्ताम् ।

---

तीक्ष्णरसं विषं ददातीति तीक्ष्णरसदः स आदिर्येषां ते । प्रक्षपिता विनाशिताः प्रवीरा योधा यस्य तत् । जर्जरं शिथिलम् ।

( २५ ) वसन्तभानुः अश्मकेन्द्रः । वानवास्यो वनप्रदेशाधिपतिः । व्यग्राहयत् विग्रहं कारितवान् । तत्परामृष्टेति—तेन वानवास्येन परामृष्टो गृहीतो राष्ट्रस्य स्वराज्यस्य पर्यन्तः प्रान्तभागो यस्य सः । तम् अश्मकेन्द्रम् । सर्वसामन्तेभ्य इत्यत्र पञ्चमीविभक्तिः । अस्य वानवास्यस्य । समगंसत मिलिता अभवन् । अभ्यर्णे समीपवर्त्तिनि । नर्मदारोधसि नर्मदातीरे । आत्मनाटकीयां स्वनर्त्तकीम् । मधुमत्तां मद्यपानप्रमत्ताम् ।

---

इस्तेमाल करते ही वे लोग मर जाते थे । इस रीति से अश्मकेश के द्वारा प्रेषित राजदूतों ने गुप्तरूपेण तीक्ष्ण विषाक्त रसों से तथा कुटिल नीतियों से अनेक धोखेवाली चालों से अनन्तवर्मा के समस्त सैन्य-बल को एवं राज्याधिकारी समुदाय को जर्जर बनाकर नष्ट भ्रष्ट कर दिया ।

( २५ ) तत्पश्चात्—वसन्तभानु ने भीलों के अधिपति भानुवर्मा को उभाड़ कर अनन्तवर्मासे लड़ा दिया । अनन्तवर्माने सम्पूर्ण राष्ट्रकी शक्ति भानुवर्माको पराजित करनेमें लगा दी । इधर अपने सभी सामन्तों को साथ लेकर वसन्तभानु अनन्तवर्मा से मिल गया और उसे हाथमें करके उसका प्रियपात्र हो गया । तब अन्य सामन्तगण भी अनन्तवर्मा की सहायता करने आ गये । सभी सामन्तों ने रेवा नदी के पुण्य तट पर अपनी छावनियाँ में एक । उस समय वहाँ पर महासामन्त कुन्तलदेशाधिपति अवन्तिदेवकी रङ्गशालाओं बनायी वेश्या नर्तन कर रही थी । वह वेश्या सुन्दरता में भूतल पर उर्वशी के समान थी । अनन्तवर्मा उसका नृत्य देखने में तल्लीन था । चन्द्रपालित आदि भी उसी के समीप बैठे हुए थे । मधुपान करके मदोन्मत्त होकर उस समय वे सब उस पर आसक्त हो रहे थे । उसी समय अश्मकेश ने कुन्तलपति अवन्तिदेव को अलग एकान्त में ले जाकर कहा—

( २६ ) अश्मकेन्द्रस्तु कुन्तलपतिमेकान्ते समभ्यधत्त—'प्रमत्त एष राजा कलत्राणि न परामृशति । कियत्यवज्ञा सोढव्या । मम शतमस्ति हस्तिनाम् , पञ्चशतानि च ते । तदावां सम्भूय मुरलेशं वीरसेनमृचीकेशमेकवीरं कोङ्कणपतिं कुमारगुप्तं नासिक्यनाथं च नागपालमुपजपाव । ते चावश्यमस्याविनयमसहमाना अस्मन्मतेनैवोपावर्तेरन् । अयं च वानवास्यः प्रियं मे मित्रम् । अमुनैव दुर्विनीतमग्रतो व्यतिषक्तं पृष्ठतः प्रहरेम । कोशवाहनं च विभज्य गृह्णीम ' इति हृष्टेन चामुनाभ्युपेते, विंशतिं वरांशुकानाम् , पञ्चविंशतिं काञ्चनकुङ्कुमकम्बलानाम् , प्राभृतीकृत्याप्तमुखेन तैः सामन्तैः समन्त्र्य तानपि स्वमतावस्थापयत् । उत्तरेद्युरेव सामन्तानां वानवास्यस्य च अनन्तवर्मा नयद्वेषादामिषत्वमगच्छत् । वस-

( २६ ) परामृशति धर्षयति । सम्भूय मिलित्वा । उपजपाव विघटयाव । लोट् । ते वीरसेनादय । अस्य अनन्तवर्मणः अविनयं दुराचरणम् । उपावर्तेरन् आगच्छेयुः । अमुना वानवास्येन । एनम् अश्मकेन्द्रम् । अग्रतः सम्मुखे । व्यतिषक्तं प्रतिरुद्धम् । अमुना कुन्तलपतिना । अभ्युपेते स्वीकृते । वरांशुकानां श्रेष्ठवस्त्राणाम् । काञ्चनेति—काञ्चनवर्णकुङ्कुमवासितकम्बलानामित्यर्थः । प्राभृतीकृत्य उपायनीकृत्य । आप्तमुखेन विश्वस्तपुरुषद्वारा । स्वमतौ स्वाभिमते । उत्तरेद्युः

( २६ ) 'यह राजा आजकल पागल सा हो गया है तथा हमारी बहू-बेटियों पर बलात्कार किया करता है । आखिरकार हम लोग कब तक ऐसे निरादरों तथा अपमानों को सहें । मेरे समीप एक सौ हाथी हैं तथा आपके समीप पाँच सौ हैं । अब हम लोग चलकर मुरलेश वीरसेन, ऋचीक देश के शासक एकवीर, कोंकण के अधिपति कुमारगुप्त तथा नासिक्य के स्वामी नागपाल को इससे फोड़कर अपनी ओर मिला लें तथा अनन्तवर्मा से उनका बैर करा दें । वे लोग इसके उच्छृङ्खल व्यवहारों से अवश्य अपनी ओर आ जायेंगे—क्योंकि ऐसा ज्ञात हो चुका है कि वे लोग इस पर क्षुब्ध रहते हैं । भीलों का अधिपति हमारा मित्र है ही अतः उसे आगे भेजकर अनन्तवर्मा को रुकवा दें । पीछे से हम लोग इस पर आक्रमण करके मार डालें । तब इसके कोष और राज्य-वाहनादि को परस्पर बाँट लें ।' जब अवन्तिदेव ने यह योजना मान ली तब बीस अच्छे वस्त्र, पचीस दुनहले तथा कुङ्कुम की सुगन्ध से युक्त कम्बलों को देकर उसने उसके विश्वासपात्र सचिवों के साथ मन्त्रणादि करके उन सबको भी अपनी ओर कर लिया । तत्पश्चात् दूसरे दिन भीलों के स्वामी को तथा उन सामन्तों की कला कुशलता से अनन्तवर्मा मार डाला गया ।

तब वसन्तभानु ने उस अनन्तवर्मा के कोश-वाहन और विघटित सैन्य-बल को अपने

न्तभानुश्च तत्कोशवाहनमवशीर्णमात्माधिष्ठितमेव कृत्वा 'यथान्यासं यथाबलं च विभज्य गृह्णीत । युष्मदनुज्ञया येनकेनचिदंशेनाहं तुष्यामि' इति शाठ्यात्सर्वानुवर्ती, तेनैवामिषेण निमित्तीकृतेनोत्पादितकलहः सर्वसामन्तानध्वंसयत् । तदीयं च सर्वस्वं स्वयमेवाग्रसत् । वानवास्यं केनचिदंशेनागृह्य प्रत्यावृत्य सर्वमनन्तवर्मराज्यमात्मसादकरोत् ।

( २७ ) अस्मिश्चान्तरे मन्त्रिवृद्धो वसुरक्षितः कैश्चिन्मौलैः संभूय बालमेनं भास्करवर्माणम् , अस्यैव ज्यायसीं भगिनीं त्रयोदशवर्षां मञ्जुवादिनीम् , अनयोश्च मातरं महादेवीं वसुंधरामादायापसर्पन्नापदोऽस्या भावितया दाहज्वरेण देहमजहात् । अस्मादृशैर्मित्रैस्तु नीत्वा माहिष्मतीं

परदिने । नयद्वेषाद् दुर्नयात् । आमिषत्वं भोग्यवस्तुत्वम् । तैर्हत इति भावः । तत्कोशेति–तस्यानन्तवर्मणः कोशवाहनं धनरत्नगजाश्वादिकम् । अवशीर्णं विध्वस्तम् । आत्माधिकृतं स्वाधिकृतम् । यथाप्रयासं स्वस्वचेष्टानुरूपम् । यथाबलं स्वस्वशक्त्यनुसारेण । सर्वानुवर्त्ती सर्वेषां मनोरञ्जकः ।

( २७ ) मौलैः भृत्यादिमूलज्ञातृभिः । 'मुखिया' इति भाषा । भास्करवर्मा विश्रुतेन पूर्वदृष्टाऽष्टवर्षदेशीयो बालकः अनन्तवर्मणः पुत्रः । ज्यायसीं ज्येष्ठाम् ।

अधिकारमें कर लिया तथा लोगों से कहा—'आप लोग अपनी शक्तिके और परिश्रमके अनुसार इसमें से हिस्सा बाँट कर लें । हमें आप लोग जो प्रसन्नतासे देंगे वही लेने में हम राजी हो जायेंगे—हमें कोई आपत्ति नहीं है । इस प्रकार के भुलावे दे देकर वसन्तभानुने सबको अपनी ओर राजी कर लिया । परन्तु बटवारेमें से सब सामन्त परस्पर झगड़ गये । वसन्तभानुने ऐसे मौके से लाभ उठाया और सभी सामन्तोंको मार डाला । तदनन्तर उन सबके समस्त धनको उसने ले लिया । भीलोंके अधिपति को जो उसका मित्र था उसमेंसे हिस्सा दे दिया और वहां से लौटकर बेवटके अनन्तवर्मा के सारे साम्राज्य पर अपना प्रभुत्व स्थापित कर लिया ।

( २७ ) इसी बीचमें सचिवोंमें श्रेष्ठ वसुरक्षित इस आपत्तिसे व्याकुल होकर कुछ पुराने दासोंको लेकर तथा अपनी त्रयोदशवर्षीया भगिनी मंजुवादिनी एवं अपनी माता महादेवी वसुन्धराके साथ भागा । परन्तु, थोड़े ही दिनो पश्चात् वह ज्वरपीड़ित होकर मर गया । तब कुछ सुहृदोंने बालकोंके साथ महादेवी वसुन्धराको उसकी सौतके पुत्रके समीप भेजवा दिया । किन्तु, उस सुचरित्रा विमाता को उसने भ्रष्टाचारिणी समझा और यह भी सोचा कि सम्भव है विमाता का विचार अपने पुत्र को राजा बनाने का होवे । इस बात का विचार कर वह बहुत घबराया तथा इसी विचार से मित्रवर्मा

भर्तृद्वैमातुराय भ्रात्रे मित्रवर्मणे सापत्न्या देवी दर्शिताभूत् । ता चार्यामनार्योऽसावन्यथाभ्यमन्यत । निर्भर्त्सितश्च तया 'सुतमियमखण्डचारित्रा राज्यार्हं चिकीर्षति' इति नैर्घृण्यात्तमेन बालमजिघांसीत् । इदं तु ज्ञात्वा देव्याहमाज्ञप्तः—'तात, नालीजङ्घ, जीवतानेनार्भकेण यत्र क्वचिदपधाय जीव । जीवेयं चेदहमप्येनमनुसरिष्यामि । ज्ञापय मा चेमप्रवृत्तः स्वावासम्' इति । अहं तु सकुले राजकुले कथंचिदेनं निर्गमय्य विन्ध्याटवीमव्यगाहिषि । पादचारिणं चैनमाश्वासयितुं घोषे क्वचिदहानि कानिचिद्विश्रमय्य, तत्रापि राजपुरुषसंपातभीतो दूराध्वमपासरम् । तत्रास्य दारुणपिपासापीडितस्य वारि दातुकामः कूपेऽस्मिन्नपभ्रश्य पतितस्त्वयैवमनुगृहीतः । त्वमेवास्यातः शरणमेधि विशरणस्य राजसूनोः' इत्यञ्जलिमबध्नात् ।

---

अपसर्पन् पलायमान । भर्तुः पत्युर्द्वैमातुराय वैमात्रेयभ्रात्रे । आर्यां सुचरित्राम् । अन्यथा दुश्चरित्रामित्यर्थः । अखण्डचारित्रा अभ्रष्टचरित्रा । राज्यार्हं राज्यप्राप्तियोग्यम् । इति हेतोः नैर्घृण्यात् निष्करुणत्वात् । अजिघांसीत् हन्तुमैच्छत् । सन्नन्ताद् हन् धातोर्लुङ् । अहम्—अस्येतिवृत्तस्य वक्ता वृद्धो नालीजङ्घनामा । अवधाय व्यवहितो भूत्वा । सकुले जनाकीर्णे । व्यगाहिषि प्राविशम् । घोषे आभीरपल्ल्याम् । विश्रमय्य विश्रामं कारयित्वा । तत्रापि घोषेऽपि । राजपुरुषेति-राजपुरुषाणां सम्पातात् आगमनाद् भीतः शङ्कित । दूराध्व दूरमार्गम् । अपभ्रश्य भ्रष्टो भूत्वा त्वया विश्रुतेनेत्यर्थः । अत अस्मात्परम् । विशरणस्य शरणरहितस्य । एधि भव । अस् धातोर्लोटि रूपम् ।

---

ने अपने सौतेले भाई की हत्या नृशंसतापूर्वक करानी चाही । परन्तु जब महारानी को यह बात ज्ञात हुई तो उन्होंने नालीजघ से कहा—'हे नालीजघ ! तुम इस बालक को कहीं ले जाकर छिपा दो और इसी के साथ तुम भी छिपकर रहो । यदि मैं जीवित रह जाऊँगी तो तुम लोगों से मिलूँगी अन्यथा हरिइच्छा । यहां से जाकर जहां पर तुम रहो उसकी सूचना गुप्त रीति से मेरे समीप भेज देना तथा कुशल वृत्त भी भेज देना ।'

महारानी की आज्ञानुसार हम इस बालक को साथ लेकर राजदरबार से बाहर होकर विन्ध्याचल के सघन वनों में जाकर छिप गये । पैदल चलने के कारण थके हुए बालक का श्रम मिटाने के लिए हम लोग कई दिनों तक एक ग्वाले की गोशाला में जाकर रहे । किन्तु, वहां पर राजपुरुषों के आने की आशङ्का थी अत यहां से हम आगे चल पड़े । मार्ग में इस बालक को बड़ी तेजी से प्यास लगी । अत जल लेने के लिए इस कूप पर हम आये और इसमें गिर पड़े । बड़ी दया करके आपने हमें इसमें से निकाल लिया

( २८ ) 'किमीया जात्यास्य माता' इत्यनुयुक्ते मयामुनोक्तम्-'पाटलिपुत्रस्य वणिजो वैश्रवणस्य दुहितरि सागरदत्तायां कोसलेन्द्रात्कुसुमधन्वनोऽस्य माता जाता' इति । 'यद्येवमेतन्मातुर्मत्पितुश्चैको मातामहः' इति सस्नेहं तमहं सस्वजे । वृद्धेनोक्तम्-'सिन्धुदत्तपुत्राणां कतमस्ते पिता' इति । 'सुश्रुतः' इत्युक्ते सोऽत्यहृष्यत् । अहं तु 'तं नयावलिप्तमश्मकन्नयेनैवोन्मूल्य बालमेनं पित्र्ये पदे प्रतिष्ठापयेयम्' इति प्रतिज्ञाय 'कथमस्यैनां क्षुधं क्षपयेयम्' इत्यचिन्तयम् । तावदापतितौ च कस्यापि व्याधस्य त्रीनिषूनतीत्य द्वौ मृगौ स च व्याधः । तस्य हस्तादवशिष्ट-

( २८ ) किमीया जात्येति-कस्येयमिति किमीया कस्या जातेरुत्पन्नेत्यर्थः । अनुयुक्ते पृष्टे । मया विश्रुतेनेत्यर्थः । अमुना नालीजङ्घेन । तं बालकम् । सिन्धुदत्तेति सिन्धुदत्तस्य बहवः पुत्रास्तेषु तव पिता कतमः किंनामक इति । तम् अश्मकेन्द्रम् । नयावलिप्तम् नीतिगर्वितम् । अश्मकनयेन पाषाणोन्मूलनन्यायेन । अश्मकमिति पाठे तु नयेन नीत्येति सम्बन्धः अस्य बालस्य । क्षुधं क्षुधाम् । क्षपयेयम् नाशयेयम् । तावत्—एतस्मिन्नन्तरे । त्रीन् इषून् बाणत्रयमित्यर्थः ।

जिससे हमारे प्राण बच गये । अब इस अनाथ राजकुमार के आप ही संरक्षक हैं, आप ही इसे पालें ।' इतना कह कर वह खड़ा हो गया और हाथ जोड़कर चकने लगा ।

( २८ ) हमने पूछा—'यह बालक किस जाति का है ?' तब उसने उत्तर दिया—'पाटलिपुत्र के वैश्य वैश्रवण की पुत्री सागरदत्ता के साथ कोशल देश के स्वामी महाराज कुसुमधन्वा का संसर्ग होने पर इसकी माता का जन्म हुआ था ।' इस बात को श्रवण कर हमने कहा—'तब तो इसकी माता और हमारे पिता दोनों के मातामह एक ही थे ।' बस, हमने उस बालक को छाती से लगा लिया । वृद्ध ने पूछा—'सिन्धुदत्त के पुत्रों में से कौन व्यक्ति आपके पिता थे ।' हमने कहा—'सुश्रुत' यह बात श्रवण कर वह परम मुदित हो गया । तब हमने मन ही मन में प्रतिज्ञा की कि 'मैं इस नीति से दर्पित अश्मक देश के स्वामी को नीति की शक्ति से नष्ट कर डालूंगा तथा इस बालक को इसके पिता के सिंहासन पर अवश्य बैठाऊँगा ।' उसी समय दो हिरण दौड़ते हुए हमारे पास आये । वे एक बहेलिये के तीन बाणों से बचकर भाग निकले थे । उसी समय वह व्याध भी वहाँ पर आकर उपस्थित हो गया । उसके पास दो बाण और भी शेष बचे थे । बस हमने उससे धनुष-बाण ले लिए और उन मृगों पर चला दिये । उनमें से एक की देह पर वह बाण ऊपर लगे हुए पङ्ख तक छिद गया तथा दूसरे की देह में हमारा बाण ऐसा छिदा कि आर-पार कर गया । उन दोनों मृगों में से एक मृग हमने बहेलिये को दे दिया और

मिपुद्धृत्य कोदण्डं चाक्षिप्यावधिपम्। एकश्च सपत्राकृतोऽन्यश्च निष्पत्राकृतोऽपतत्। स चैकं मृगं दत्त्वा मृगयवे, अन्यस्यापलोमत्वचः क्लोमापोह्य, निष्कुलाकृत्य विकृत्योर्वङ्घ्रि ग्रीवादीनि शूलाकृत्य दावाङ्गारेषु, तेन आमिषेण तयोरात्मनश्च क्षुधमतार्पम्। एतस्मिन्कर्मणि मत्सौष्ठवेनातिहृष्टं किरातमम्मि पृष्टवान्—'अपि जानासि माहिष्मतीवृत्तान्तम्' इति। असावाचष्ट—'तत्र व्याघ्रत्वचो दृतीश्च विक्रीयाद्यैवागतः किं न जानामि। प्रचण्डवर्मा नाम चण्डवर्मानुजो मित्रवर्मदुहितरं मञ्जुवादिनीं विलिप्सुरभ्येतीति तेनोत्सवोत्तरा पुरी' इति।

---

अतीत्योद्धृत्य। स च व्याध आपतित इत्यध्याहारेणान्वयः। अवधिपं प्राहरम्। सपत्राकृतो निष्पत्राकृतश्च 'सपत्रनिष्पत्रादतिव्यथने' इति डाच्। अनयोरर्थस्तु—सपत्रः शरो मृगस्य शरीरे प्रवेशित इति सपत्राकृतः—मृगस्य पार्श्वद्वयं भित्त्वा निष्पत्रः शरो बहिष्कृत इति निष्पत्राकृतः'। मृगयवे व्याधाय। अपलोमत्वचो निर्लोमचर्मणः। अन्यस्येत्यस्य विशेषणम्। क्लोम फुप्फुसम्। 'फेफड़ा' इति भाषा। अपोह्य निःसार्य। निष्कुलाकृत्य निस्त्वचीकृत्य। विकृत्य विच्छिद्य। शूलाकृत्य शूलेन पाचयित्वा। दावाङ्गारेषु वनाग्निषु। तप्तेन उष्णेन भर्जितेन वा। आमिषेण मांसेन। तयोः बालवृद्धयोः। अतार्पं न्यवारयम्। मत्सौष्ठवेन मम पाटवेन दृष्टतयेति यावत्। किरातं पूर्वागतं व्याधम्। व्याघ्रत्वचो व्याघ्रचर्माणि। दृतीश्चर्मपुटकान्। किं न जानामीत्यस्यार्थः। सर्वमेव जानामीति विलिप्सुर्लब्धुमिच्छुः। उत्सवोत्तरा उत्सवभूयिष्ठा।

---

दूसरे मृग के रोयें, चमड़ी तथा क्लोम (अन्तःकरण के समीप रहने वाला पिपासा का उत्पत्ति स्थान) एवं अँतड़ियाँ आदि निकालकर पृथक् कर दीं और काट छाँट दिया। तत्पश्चात्—उसकी जाँघें, हड्डियाँ, गला आदि सलाख की लकड़ियों में बाँधकर अरण्याग्नि में रखकर उसके अङ्गारों पर भूना। इस प्रकार उसके पके हुए मांस द्वारा हमने उस बालक की और नाड़ीजङ्घ की एवं अपनी क्षुधा की निवृत्ति की। हमारे इस कौशल पर वह बहेलिया बहुत प्रसन्न हुआ। हमने उससे पूछा—'माहिष्मती का कुछ समाचार जानते हो?' उसने उत्तर दिया—'वहीं से तो बाघ के चमड़े की पिटारियों को बेचकर लौट रहा हूँ। भला, वहाँ का वृत्त क्यों न जानूँगा। चण्डवर्मा का छोटा भाई प्रचण्डवर्मा मित्रवर्मा का कन्या मञ्जुवादिनी को लेने आ रहा है। इसलिए उस नगरी में आज बड़ा भारी महोत्सव मनाया जा रहा है।'

(२६ अथ कर्णे जीर्णमब्रवम् 'धूर्तो मित्रवर्मा दुहितरि सम्यक्प्रतिपत्त्या मातरं विश्वास्य तन्मुखेन प्रत्याकृष्य बालकं जिघांसति । तत्प्रतिगत्य कुशलमस्य मद्वार्तां च देव्यै रहो निवेद्य पुनः कुमारः शार्दूलभक्षित इति प्रकाशमाक्रोशनं कार्यम् । स दुर्मतिरन्तःप्रीतो बहिर्दुःखं दर्शयन्देवीमनुनेष्यति । पुनस्तया त्वन्मुखेन स वाच्यः—'यदपेक्षया त्वन्मतमत्यक्रमिष सोऽपि बालः पापेन मे परलोकमगात् । अद्य तु त्वदादेशकारिण्येवाहम्' इति । स तथोक्तः प्रीतिं प्रतिपद्याभिपत्स्यति । पुनरनेन वत्सनाभनाम्ना महाविषेण संनीय तोयं तत्र मालां मज्जयित्वा तया स वक्षसि मुखे च हन्तव्यः । 'स एवायमसिप्रहारः पापीयसस्तव भवतु यद्यस्मि पतिव्रता' । पुनरनेनागदेन संगमितेऽम्भसि तां मालां मज्ज-

(२९) जीर्णं वृद्धं नालीजंघमित्यर्थः । दुहितरि मञ्जुवादिन्याम् । सम्यक्प्रतिपत्त्या अनुकम्पया । प्रत्याकृष्य आनीय । तत् तस्मात् कारणात् । अस्य भास्करवर्मणः । रहो निर्जने । पुनः पश्चात् । आक्रोशनं क्रन्दनम् । त्वन्मुखेन त्वां सम्प्रेष्येत्यर्थः । स मित्रवर्मा । अत्यक्रमिषम् अतिक्रान्तवती । प्रतिपद्य प्राप्य । अभिपत्स्यते अनुग्रहीष्यति देवीमिति शेषः । वत्सनाभो विषभेदः । दारदो वत्सनाभश्चेत्यमरः । संनीय मिश्रयित्वा । तया देव्या । स मित्रवर्मा । अगदेन ओषधिना । सङ्गमिते मिश्रिते । स्वदुहित्रे मञ्जुवादिन्यै । तस्मिन् मित्रवर्मणि । तस्यां

(२९) तत्पश्चात् हमने उस बूढ़े नालीजंघ के कान में कहा—'यह कपटी मित्रवर्मा अपनी कन्या मंजुवादिनी के ऊपर प्रेम दरसा तथा उसके द्वारा माता को विश्वास दिलवा करके इस बालक को अपने समीप बुलाकर मार डालना चाहता है । अतः आप हमारा तथा इस बालक का कुशल समाचार लेकर देवी वसुन्धरा के समीप जायँ तथा वहाँ यह कह कर रोने लगें कि बालक को सिंह खा गया ।' इस बात पर दुराचारी मित्रवर्मा मन में मुदित होकर ऊपरी दुःख प्रकट करता हुआ महारानी को सान्त्वना देगा । तत्पश्चात् महारानी आपके द्वारा उस दुष्ट से यह कहला भेजे कि जिसके लिए मैंने तुम्हारी बात नहीं मानी वह बालक ही मर गया, अब तो आप जो आज्ञा दें वही मैं करूँ । यह श्रवण कर वह अति हर्षित हो जायगा और महादेवी वसुन्धरा के समीप आवेगा । उस समय इस वत्सनाभ नामक महाविष को पानी में घोलकर उसमें पुष्पों की माला भिगो कर रखे रहें तथा उस मित्रवर्मा के आते ही उसकी छाती और मुख पर बार-बार उसी माला को प्रेम से मारें तथा कहें—'यदि मैं पतिव्रता होऊँ तो मेरी माला की मार तुम्हारे लिए तलवार के

यित्वा स्वदुहित्रे देया । मृते तु तस्मिंस्तस्यां च निर्विकारायां सत्याम्, सतीत्येवैनां प्रकृतयोऽनुवर्तिष्यन्ते । पुनः प्रचण्डवर्मणे संदेश्यम्—'अनायकमिदं राज्यम् । अनेनैव सह बालिकेयं स्वीकर्तव्या' इति । तावदावां कापालिकवेषच्छन्नौ देव्यैव दीयमानभिक्षौ पुरो बहिरुपश्मशानं वत्स्यावः । पुनरार्यप्रायान्पौरवृद्धानामात्यांश्च मन्त्रिवृद्धानेकान्ते ब्रवीतु देवी-स्वप्नेऽद्य मे देव्या विन्ध्यवासिन्या कृतः प्रसादः । अद्य चतुर्थेऽहनि प्रचण्डवर्मा मरिष्यति । पञ्चमेऽहनि रेवातटवर्तिनि मद्भवने परीक्ष्य वैजन्यम्, जनेषु निर्गतेषु कपाटमुद्घाट्य त्वत्सुतेन सह कोऽपि द्विजकुमारो निर्यास्यति । स राज्यमिदमनुपाल्य बालं ते प्रतिष्ठापयिष्यति । स खलु बालो मया व्याघ्रीरूपया तिरस्कृत्य स्थापितः । सा चेयं वत्सा मञ्जुवा-

मञ्जुवादिन्याम् । निर्विकारायां विकाररहितायाम् । सतीति पतिव्रतेति । एनां देवीम् । अनुवर्तिष्यन्ते अनुसरिष्यन्ति । सन्देश्यं वाचिकं प्रेषणीयम् । अनायकं नायकशून्यम् । अनेन राज्येन । स्वीकर्तव्या विवाह्या । तावत् तावता कालेन । आवाम् अहं भास्करवर्मा च । दीयमाना भिक्षा ययोस्तौ । पुरो बहिर्नगराद्बहिः । उपश्मशानं श्मशानसमीपे । आर्यप्रायान् साधून् सच्चरित्रान् । वैजन्यं जनशून्य-

सदृश हो ।' इसके पश्चात् हमारी इस औषध में वह माला को लेवें तथा निर्विष करके उसे अपनी कन्या मञ्जुवादिनी को दे दें । ऐसा कार्य करने से मित्रवर्मा मर जायगा और मञ्जुवादिनी बच जायगी ।

ऐसी स्थिति में लोग महादेवी को सती समझने लगेंगे और उसकी पूजा करेंगे । तदनन्तर प्रचण्डवर्मा के समीप यह सन्देश भेजा जाय कि यह साम्राज्य अधुना राजा से रहित है । अतः आप इस साम्राज्य के साथ-साथ इस बालिका को भी स्वीकारिये । तब तक हम दोनों कापालिक साधु का वेश धर कर महारानी की भिक्षा पर जीवन व्यतीत करते हुए नगर के बाहर श्मशान में रहेंगे । समय पाकर महादेवी अपने निर्भीक नगरवासियों और वृद्ध सचिवोंको बुलाकर एकान्त में कहें—'आज भगवती विन्ध्यवासिनी देवी ने स्वप्न में मुझसे आकर कहा है कि आज के चौथे दिन प्रचण्डवर्मा मर जायगा । पाँचवें दिन नर्मदा के तट पर एकान्त में वर्तमान मेरे मन्दिर में सन्नाटा हो जायगा तब तक एक विप्र का बालक तुम्हारे बालक के साथ फाटक खोलकर बाहर आवेगा । वह बालक इस साम्राज्य को लेकर तुम्हारे पुत्र को राज्यसिंहासन पर आरूढ कर देगा । इस समय मैं व्याघ्री बनकर तुम्हारे पुत्र की रक्षा कर रही हूँ । मञ्जुवादिनी उस वि

दिनी तस्य द्विजातिदारकस्य दारत्वेनैव कल्पिता' इति । तदेतदतिरहस्यं युष्मास्वेव गुप्तं तिष्ठतु यावदेतदुपपत्स्यते' इति ।

( ३० ) स सांप्रतमतिप्रीतः प्रयातोऽर्थश्चायं यथाचिन्तितमनुष्ठितोऽभूत् । प्रतिदिशं च लोकवादः प्रासर्पत्—'अहो माहात्म्यं पतिव्रतानाम् । असिप्रहार एव हि स मालाप्रहारस्तस्मै जातः । न शक्यमुपधियुक्तमेतत्कर्मेति वक्तुम् । यतस्तदेव दत्तं दाम दुहित्रे स्तनमण्डनमेव तस्यै जातं न मृत्युः । योऽस्याः पतिव्रतायाः शासनमतिवर्तते स भस्मैव भवेत्' इति ।

( ३१ ) अथ महाव्रतिवेषेण मां च पुत्रं च भिक्षायै प्रविष्टौ दृष्ट्वा प्रस्नुतस्तनी प्रत्युत्थाय हर्षाकुलमब्रवीत्—'भगवन्, अयमञ्जलिः ।

ताम् । अतिरहस्यमतिगोपनीयम् । यावत् यत्कालपर्यन्तम् । उपपत्स्यते सिद्धं भविष्यति ।

( ३० ) सः नालीजंघः । अर्थः मदुक्तो विषयः । प्रासर्पत् प्राचरत् । तस्मै तदर्थम् मित्रवर्मणे इत्यर्थः । उपधियुक्तं कपटतायुक्तम् । दाम माला । अतिवर्तते लंघयति ।

( ३१ ) महाव्रतिवेषेण कापालिकच्छद्मना । भिक्षायै भिक्षार्थम् । प्रस्नुतस्तनी स्रवत्पयोधरा । यद्येवं भवद्वचनं सत्यं स्यात् । अस्याः ममेत्यर्थः । अस्याः

कुमार की परिणीता भार्या होगी । हमने जो अद्गुप्त की बात बतायी है, उसे तब तक आप लोग गुप्त रखें जब तक यह बात ठीक न हो जाय ।

( ३० ) इन बातों को सुनने के पश्चात्—वह बूढ़ा नालीजंघ अति आनन्द के साथ विदा हुआ तथा हमने जो योजनायें बनायी थीं उसने उन्हें सम्पादित भी कर दी । अब चारों ओर यह हल्ला हो गया कि, 'देखो पातिव्रत धर्म की कितनी बड़ी महिमा है कि देवी ने मित्रवर्मा पर माला का प्रहार किया और वह प्रहार उसके लिए खड्ग प्रहार हो गया । यदि यह कहा जाय कि उक्त माला में कोई विष मिला था तो ऐसी कल्पना करना भी भ्रममात्र है, क्योंकि उसी माला द्वारा मित्रवर्मा को मारकर देवी ने वही माला मंजुवादिनी को दे दी है और उसने तुरन्त धारण भी कर लिया । परन्तु वह तो न मरी अपितु, वह माला उसके स्तनों की भूषण बन गयी अतः जो कोई भी इस पतिव्रता की आज्ञाओं को न मानेगा वह जलकर भस्म हो जायगा ।'

( ३१ ) तदनन्तर हम उसके साथ संन्यासियों का रूप धरकर उसके यहाँ भिक्षा माँगने गये । हम दोनों को देखकर वह अति हर्षित हुई । उसके स्तनों से दुग्ध की धारा बह चली । वह गद्गद स्वर में बोली—'हे भगवन् ! मैं आपसे हाथ जोड़कर विनय

अनाथोऽयं जनोऽनुगृह्यताम् । अस्ति ममैकः स्वप्नः स किं सत्यो न वा' इति । मयोक्तम्—'फलमस्याद्यैव द्रक्ष्यसि' इति । 'यद्येव बहु भागधेयमस्या यो दास्या । स खल्वस्याः सानाथ्यशंसी स्वप्नः' इति मद्दर्शनरागबद्धसाध्वसां मञ्जुवादिनीं प्रणमय्य, भूयोऽपि हर्षगर्भमब्रूत—'तच्चेन्मिथ्या सोऽद्य युष्मदीयो बालरुपाली श्वो मया निरोद्धव्य' इति । मयापि सस्मितं मञ्जुवादिनीरागलीनदृष्टिलीढधैर्येण 'एवमस्तु' इति लब्धभैक्षः नालीजङ्घमाकार्य निर्गम्य ततश्च स्वानुयान्तं शनैरपृच्छम्—'क्वासावल्पायुः प्रथितः प्रचण्डवर्मा' इति । सोऽब्रूत—'राज्यमिदं ममेत्यपास्तशङ्को राजस्थानमण्डप एव तिष्ठत्युपास्यमानः कुशीलवैः' इति ।

( ३२ ) 'यद्येवमुद्याने तिष्ठ' इति तं जरन्तमादिश्य तत्प्राकारैकपार्श्वे

मद्दुहितुः सानाथ्यं शंसतीति सानाथ्यशंसी सनाथतासूचकः । मद्दर्शनेति—मम दर्शनाद् रागेण प्रेम्णा बद्धमुत्पादितं साध्वसं लज्जा यस्यास्ताम् । प्रणमय्य प्रणामं कारयित्वा मञ्जुवादिन्येति शेषः । तत् तव वचनं चेन्मिथ्या भवेत्तर्हि । बालकपाली शिशुयती । मञ्जुवादिनीत्यादि—मञ्जुवादिन्या रागेण प्रेम्णा लीना संसक्ता या दृष्टिस्तया लीनं कवलितं धैर्यं यस्य तेन । स नालीजङ्घः । राजस्थानमण्डपे राजसभायाम् । कुशीलवैः चारणैः ।

( ३२ ) जरन्तं वृद्धम् । शून्यमठिकायां निर्जनमठे । मठप्राकारस्यैकपार्श्वे के

करती हूँ कि आप इस अनाथ को सनाथ बनावें । मैंने एक स्वप्न देखा है वह सत्य है या नहीं ?' हमने उत्तर दिया—'उस स्वप्न का फल आज ही ज्ञात होगा ।' इस बात को श्रवणकर उसने कहा—'यदि इस दासी का इतना बड़ा भाग्योदय हुआ तो मैं समझती हूँ कि यह स्वप्न इसे सनाथ करने के लिये ही सूचनार्थ हुआ था ।' ऐसा कहकर हमें देखती हुई उसने आसक्त होने वाली मञ्जुवादिनी से प्रणाम कराकर हमसे कहा—'यदि मेरा यह स्वप्न मिथ्या हुआ तो कल मैं आपके इस बाल ब्रह्मचारी को रोक लूँगी ।' हमने मञ्जुवादिनी के अनुराग को स्थिर दृष्टि से अवलोकित कर मन्द हँसी हँसकर कहा—अच्छी बात है, ऐसा ही सही, तथा भिक्षा ले ली और नालीजंघ को साथ लेकर चल पड़े । कुछ दूर मार्ग पार कर हमने नालीजंघ से पूछा—'वह अल्पायु चण्डवर्मा इदानीं कहाँ पर है ?' उसने उत्तर में कहा—'उसे पूर्ण विश्वास हो चुका है, कि यह साम्राज्य उसी का है अतः वह स्तुतिपाठकों (भाटों) द्वारा स्तुतियाँ सुनता हुआ राजसभा में बैठा हुआ है ।'

( ३२ ) 'यदि ऐसा है तो आप इस उद्यान में ही ठहरें ।' हम ऐसा कहकर उस

क्वचिच्छून्यमठिकायां मात्राः समवतार्य, तद्रक्षणनियुक्तराजपुत्रः, कृतकुशीलववेषलीलः प्रचण्डवर्माणमेत्यान्वरञ्जयम् अनुरञ्जितातपे तु समये, जनसमाजज्ञानोपयोगीनि संहृत्य नृत्यगीतनानारुदितादिहस्तचङ्क्रमणमूर्ध्वपादालातपादपीठवृश्चिकमकरलङ्घनादीनि मत्स्योद्वर्तनादीनि च कारणानि, पुनरादायादायासन्नवर्तिनां छुरिकाःताभिरुपाहितवर्ष्मा चित्रदुष्कराणि करणानि श्येनपातोत्क्रोशपातादीनि दर्शयन्, विंशतिचापा-

प्रत्ययः। मात्राः कन्यादिपरिच्छदान्। मात्रा परिच्छदेऽल्पेंऽशे इति कोषात्। तद्रक्षणे मात्रासंरक्षायां नियुक्तो राजपुत्रो येनासौ। कृतकुशीलवेति—कुशीलवश्चद्म-वेषयर्थः। अनुरञ्जितो रक्त आतपो यस्मात्—दिवावसानकाले। जनसमाजस्य लोकसमूहस्य ज्ञानोपयोगीनि यथा लोकाः ज्ञातुं प्रभवेयुस्तथाभूतानि। संहृत्य दर्शयित्वा। नृत्यं नर्त्तनं, गीतं गानं नानारुदितादि नानाविधक्रन्दनानुकारि शब्दादि, हस्तचंक्रमणम् इतस्ततो हस्तभ्रामणम्, ऊर्ध्वपादोऽलातपादश्चेति नृत्यविशेषौ, वृश्चिकलंघनं वृश्चिकेन क्रीडनं मकरलंघनमपि तथा। द्वन्द्वान्ते बहुव्रीहिः। मत्स्योद्वर्त्तनं मीनविलसितम्। करणानि क्रियाविशेषान्। आदायादाय विश्वासोत्पादनार्थं पुनःपुनर्गृहीत्वा। आसन्नवर्त्तिनां समीपस्थितानाम्। छुरिकाः शस्त्रिकाः। आदायेत्यस्य कर्म। ताभिश्छुरिकाभिः। उपाहितवर्ष्मा संयुक्तशरीरः। चित्रदुष्कराणि चित्राणि आश्चर्याणि दुष्कराणि अन्यैः कर्तुमशक्यानि। श्येनः पक्षिविशेषः उत्क्रोशः—कुररपक्षी तद्वत्पातः पतनं तादृशानि। विंशतिचापेति–विंशतिचाप-

राजप्रासाद के एक कोने में वर्तमान शून्य मठ में चले गये। वहाँ पर जाकर हमने कापालिक वेष उतार कर धर दिया और चारण का रूप धारण करके प्रचण्डवर्मा के समीप चले गये। कह-सुनकर समझकर राजकुमार को भी उसकी सेवा में लगा दिया तथा कविता सुनाकर प्रचण्डवर्मा का मनोरंजन करने लगे। जब सायंकाल का समय हुआ और सूर्यभगवान् लाल हो गये तब हमने ऐसा रूप धारण किया जिससे साधारण लोग हमें पहचान न सकें। नृत्य गान, विविध रीति के हाव-भाव, रोदन-हास, हाथ-पाँव मटकाकर दोनों हाथों से पृथिवी पकड़कर शिर घुमाते हुए ऊपर की ओर पैरों को उठाकर स्वांग दिखाये। फिर एक पाव उठाकर दूसरा पैर संकुचित कर नाचने, बिच्छू वा मकर के समान आकार बनाने, मछली के समान रेंगने-उलटने-पुलटने आदि के कौशल दिखाये। तब बाजीगर के समान अपने पास के दर्शकों से छुरियाँ लेकर उनके ऊपर अपनी देह का भार रख दिया—मेरे ऐसे कार्य को देखकर वे आश्चर्यचकित हो गये क्योंकि वैसे कार्य साधारण लोग नहीं कर सकते थे। तत्पश्चात् कुररी पक्षी के समान

